श्रीः

# रसकौस्तुभः

श्रीमन्महामहोपाध्याय श्रोत्रियकुलक
मलारविन्दबन्धु वेणीदत्तविरचितः

मिथिलामण्डलान्तर्गत सर्षपग्रामवास्तव्य श्रोत्रिय
वंशावतंस झोपाह्व गोपीनाथात्मज श्रीलेखनाथश
र्म्मणा टिप्पण्यादिभिः समलङ्कृत्य स्वकीयरचित
वर्षाहर्षकाव्येन सय्युँक्तीकृत्य संशोध्य च स्वव्य-
येन संस्कृतसाहित्यविनोदिनामुपकाराय
दरभङ्गा "श्रीरमेश्वर यन्त्रालये"
मुद्रयित्वा प्रकाशीकृतः ॥

रमौलीग्रामनिवासि मिश्रोपाख्य श्रीब्रह्मराजित
शर्म्मणा च संशोधितः ।



( सन् १३१४ शाल )

मार्गकृष्ण ११

# ❀ ॥ भूमिका ॥ ❀

श्रीमन्मिथिलेश परिपालित महीमण्डलमण्डनायमान भारती लीलाविलासाऽऽसादित निखिलानन्दलब्ध प्रकाशः कृतिकुलकुमुदानन्दचन्द्रजनाधिष्ठितप्रधानप्रदेशः सर्षप[1]नामधेयो राजतेग्रामवर्य्यः । यत्रचपुरन्दरादि दिविषद्वृन्दमौलिमालालालितचरणारविन्दा प्रणयप्रणत गङ्गाधरजटाजूटस्खलितजाह्नवीजलधाराधौतपादपद्मा भगवती सिद्धेश्वरी प्रतिवसति । यत्रचासीद्दिगन्तकीर्ति मिश्रोपनापकः सकलावनिमण्डलमण्डनामिव मण्डनाभिख्यः । शङ्कर एवशङ्करश्च प्रादुरासीत् । यश्चासंस्तुतविपक्षपक्षः पक्षधरश्चिरायालञ्चकार । यत्कीर्ति व्रतती सकलसहृदय हृदयालवालेषु पुष्पितेवाद्यापि प्रतिक्षणं समुल्लसति ॥ तस्यैवोत्तरेणात्मसौहार्द्दं प्रकटयन्निव समुल्लसति हाटी नामावसथः ॥ यश्चार्ज्जुन इवार्ज्जुनयशा भास्करइव सुहृत्पद्मप्रकाशनैकमना द्विजराजइव द्विजराजगणोऽद्यापि नितरामलङ्करोति । तत्रैवाराद्ध वाग्देवी वितीर्णविद्याकलापोवेणीदत्तनामधेयः श्रोत्रियवर्य्यः कविराविरासीत् । यद्गुण कीर्त्तने गद्यपद्यनिरवद्यरचनाचण महाकवीनामपीनीखिलाविशेषलेखनपटीयसी लेखनीनिश्चलेवाभवत् । यस्यानेककाव्यान्याबालवृद्धजनमनांस्युल्लासयन्ति चकासतीति विदन्तितरामेव तत्रभवन्तो विद्वांसः । तेनैव कविकुलमुकुटालङ्कारमौलिहीरेण कौस्तुभभूतोयमकारि रसकौस्तुभः । यश्चकतिपयकृतिमहाशयसंरक्षितोऽपि नासीत्सकल जनसुलभः । सचायमुक्तसर्षप ग्रामनिवासिश्रीलेखनाथ शर्म्मणा श्रोत्रियवरेण कतिपयप्राचीन पुस्तकप्रतिमातःसंशोध्य क्वचित्क्वचिट्टिपणीकृत्वा सोत्साहं प्रकाशीकृतः ॥ शुभमस्तु ॥

१ । सरिसव, इति प्रसिद्धः ॥



## श्रीगणेशायनमः ।

कस्त्वं चक्री व्रज निजपुरन्नात्रसर्प्पस्य वा सोगोपालोऽहं विपिनसविधे गोष्ठमस्ति प्रयाहि । पद्मेशोऽहं व्रजति न धरामण्डले चण्ड रश्मिः, कृष्णो राधावचनविजितः पातु वोऽभीष्टमित्थम् ॥ १ ॥

श्रीकृष्णसदयोदारहृदये धर्तुमिच्छया ॥
वेणीदत्तेन यत्नेन कल्प्यते रसकौस्तुभः॥२॥
सर्वथापि वृथाज्ञेयाःप्रार्थनादुर्ज्जने मुहुः ॥

---

१ उदारञ्चतत् हृदयम् उदारहृदयं दययालहितं सदयं सदयंचतदुदारहृदयं सदयोदारहृदयं श्रीकृष्णस्यतत् श्रीकृष्णसदयोदार हृदयं तस्मिन् ॥

अस्यास्ति दैवतं विष्णुर्वर्णो वारिमुचांसमः ॥
संभोगोविप्रलम्भश्चशृङ्गारो द्विविधोमतः ॥
सम्प्रोच्यतेविशेषेणलक्ष्यञ्चलक्षणन्तयोः ॥
दर्शनस्पर्शनालापचुम्बनादिक्रियोद्भवम् ॥
अन्योन्यंयत्सुखंयूनोःसम्भोगस्ससमीरितः,,

❀ यथा ❀

शिखण्डानामालीवृतमुकुटशाली जलमुचा
न्त्विषां गर्वध्वंसी ललितरववंशीवरधरः ॥
निधायाङ्के वामामसमशररामातिरुचिराम्मु
दारण्ये कृष्णोवितत[2]रतितृष्णोविहरति।१॥५॥

❀ यथा वा ❀

अङ्के स्थिता घनरुचेर्म्मधुसूदनस्य पङ्के
रुहायतमुखी परिराजते स्म ॥ शङ्के कला-
तिविमलाशशिनःकलङ्कपर्य्यङ्कमध्यकलिता
भुवि सङ्गतेति ॥ २ ॥ ६ ॥
"पूर्वप्रणयिनोर्यूनोस्सन्तापोयोवियोगजः ॥
विप्रलम्भस्ससम्प्रोक्तस्सोपिपञ्चविधःस्मृतः॥

२ वितता विस्तृता रतितृष्णायस्य सः ॥
१ क्रीडागृहसमीपे ॥

भवन् भावीच भूतश्च प्रवासस्त्रिविधोमतः ॥

❀ भवत्प्रवासहेतुकोयथा ❀

यामियामीति वक्तव्यं नच प्राणेश्वराधुना ॥
तद्वर्णश्रवणाच्चेतोदिशंयामीप्रधावति ६।१०

❀ भाविप्रवासहेतुकोयथा ❀

समन्तात्सञ्जाते वनभुवि वसन्ते सुललिते पिकानामालापे कलमलिकलापे विदधति ॥ दिगन्तम्मे गन्ता पतिरथ निहन्ता मनसिजस्समीपेऽहन्ता त्वत्कामिह वत धास्यामि शरणम् ॥ ७ ॥ ११ ॥

❀ भूतप्रवासहेतुकोयथा ❀

पिकानामुद्गीर्णङ्कलमतुलकर्णज्ज्वरभरं सुधांशुस्सन्तापङ्कलयति च हा पङ्कजदलम् । तनुन्तावद्धीरो व्यथयति समीरोऽपिनितरां घनश्यामे वामे सपदि ममवामंजगदभूत् ॥८॥१२॥

---

१ प्रवासोविदेशस्थितिः । यथा कर्णेज पै राहितराज्य लोभा क्षेपेननीताविकृतिलघिम्ना । रामप्रवासेव्यमृशन्नदोप्रञ्जनापवदं स नरेन्द्रमृत्युम् ॥ इतिभक्तिः ।

२ संयमनीङ्गन्तुमुत्कण्ठते । इतिभावः ।

सामदानंच भेदश्च नत्युपेक्षे रसान्तरम्„ ॥

❀ साम यथा ❀

बाले काले स्मरनरपतेः सन्निधिस्थे वसन्ते
मानम्लानं किमिहवदनं कर्तुमुत्कण्ठितासि ॥
कस्ते चित्ते निवसति मम प्रौढबाधोऽपराधो
यस्मादश्माधिककठिनतां तत्र तन्वि प्र·
तीमः ॥ १२ ॥ १६ ॥

❀ दानं यथा ❀

मङ्गुम्फितामिमां तन्वि सुगन्धिकुसुमस्र·
जम् ॥ कुचशम्भुर्गृहित्वाद्य रुषन्ते हरतु
द्रुतम् ॥ १३ ॥ १७ ॥

❀ भेदो यथा ❀

पुनरपि शृणु हितवाचङ्कुरु सखिमाञ्चच·
लश्चेतः ॥ मुरभिदि गतापराधे भवति न
राधे तवोचितः कोपः ॥ १४ ॥ १८ ॥

❀ नतिर्य्यथा ❀

पदयुगले तव नाथोनिपतति पाथोजलो[२]

२ पाथोजलोचने कमललोचने । पाथोजकमलमितिरा·
जनिघन्टुः ॥

लम्भे वरस्त्रीणामेताकामदशादश ॥ प्रत्येकं साम्प्रतं वक्ष्ये तदुदाहरणं स्फुटम् ॥

❀ अभिलाषो यथा ❀

७ । कपे भूयादित्यादि ॥ स्मृतिर्य्यथा ॥

नालापं तनुते नचापिकुरुते निश्वास कोष्णा[1] दिशः किञ्चिन्नेत्रपयो न मुञ्चति धरामध्ये सुसध्याक्षणम् ॥ श्रीखण्डद्रवकेन सिञ्चति नवा वक्षोऽपि रक्षोगृहे स्मृत्वा रामकुतूहलानि हृदये सीता परंतिष्ठति ॥ ॥ १८ ॥ २२ ॥

❀ चिन्तायथा ❀

सञ्चारञ्चाधिकमपिजनाः कुर्वते पौरमार्गे निद्रा न द्रा[2]गपि गृहपतेरागता नेत्रयुग्मे ॥ धीरं धीरं कलयति घने ध्वानमुच्चैः समन्तात्कामे वामे कथमथमयाऽलोकनीयो

---

१ निश्वासेन मन्दोष्णाइत्यर्थः । कोष्णं कवोष्णंमन्दोष्णं कदुष्णमित्यमरः ॥

२ झटिति । स्राक्झटित्यंजसाऽह्नायद्राङ्मंक्षुसपदिद्रुतं इत्यमरः ॥

## ❀ जड़ता यथा ❀

सावाणी हरिणीदृशोहि वदनं श्वासञ्च नाशायनं रागश्चाधरपल्लवञ्चनयने सद्यो निमेषावली ॥ स्पन्दानां निचयस्तनुं सुललिताङ्गोपाल संभूयतां स्वान्तङ्केवलमेवनाम भवतस्तस्या जहौ न क्षणम् ॥२३॥२७॥

## ❀ व्याधिर्य्यथा ❀

रे रे सिञ्च नींकिंचिदम्बुजमुखीं श्रीखण्डपङ्के-रिमान्दूरम्पद्मदलान्निधेहि सजलं कर्पूरपूरा-न्वितम् ॥ स्नेहालीं वितताऽतनुज्वरभृतान्तापस्यशान्तिः क्षणन्नस्यादेवरसायनेन च वि-नाशीतादिभिर्भैषजैः ॥ २४ ॥ २८ ॥

## ❀ उद्वेगो यथा ❀

आहूता महता कुहूरथमुहूराहुर्ग्रहे स्थापितः पारावारविशोषणाय कुपितः कुम्भोद्भवः प्रेरितः ॥ इत्थंसृष्टिरकारि यस्य विधिना ना-

१ स्वान्तम्मनः । स्वान्तंहृन्मानसंमन इत्यमरः ॥

२ समुद्रशोषणायेत्यर्थः ॥

३ कुम्भोद्भवोऽगस्त्यः ॥

विधत्ते कारुण्यं मम जगति तारुण्यमधुना ॥ १ ॥ ३० ॥

❀ यथावा ❀

समन्ततोऽत्यन्तसुशीतलेऽनिले समागते-चारु वसन्तवासरे ॥ कुहूकुहूच्चैरुदिते पिकी-कले मुहुर्मुहुः सीदति कापि कामि-नी ॥ २ ॥ ३१ ॥

❀ यथावा ❀

मरुच्चलत्पल्लवपाणिनाऽधुना परिस्पृशन्तोद्रुमराजराजयः ॥ लतावलानां स्तवक-स्तनानमी तुदन्ति चेतांसि मधौ वियोगिनाम् ॥ ३ ॥ ३२ ॥

❀ यथावा ❀

हसन्ती वासन्ती विकचकुसुमाली समुदयैरुदारैर्गायन्ती मुदितपिकभृङ्गावलिरवैः ॥ धिशङ्कं क्रीडन्ती विततललिताङ्गे विटपिनां मुनीनामप्यन्तः सहचरि वसन्ते व्यथयति ॥ ४ ॥ ३३ ॥

❀ यथावा ❀

दधानाः कोदण्डं सकलरणचण्डं सुरपतेः क्षिपन्तोधारालीमधिधरणिनालीकतुलितम् निनादं कुर्वन्तो नभसि विलसन्तोजलधरा निहन्तुं सम्प्राप्ताः शिव शिव समन्ताद्विरहिणम् ॥ ४ ॥ ३७ ॥

❀ अथ शरन्निशावर्णनम् ॥ ❀

हिमकरधवलितविपुलाकाशा विकचकुसुमपरिकरललिताशा ॥ वद सम्प्रति सखि किमिह विधेयं शरदि न सुखदा यदि च निशेयम् ॥ १ ॥ ३८ ॥

❀ यथावा ❀

धात्रा हर्त्री नभसि तमसां स्थापितोऽसीति मत्वा कान्तस्वान्तस्थितमपि कथं तन्नभिन्नं करोषि ॥ सोमं स्नेहादितिकुमुदिनी

---

१ विकचानि च तानिकुसुमानि विकचकुसुमानितेषां परिकरः समूहः ॥ भवेत्परिकरो व्राते पर्य्यङ्कपरिवारयोरिति विश्वः तेन ललिता आशाय स्यांसा ॥

माः ॥ शृङ्गारालम्बनत्वेन नायिकादिर्न्निरूप्यते ॥ स्वकीया परकीया च सामान्या च ततऽपरम् ॥ नायिका त्रिविधा प्रोक्ता काव्यशास्त्रविशारदैः ॥ भर्त्तुः शुश्रूषणे शक्ता भर्तुर्य्यैवानुरागिणी ॥ लज्जाशीलादिबलिता स्वकीया परिकीर्त्तिता,, ॥

## ❀ स्वीया यथा ❀

केलीमन्दिरदेहलीबहिरियं दातुन्न दक्षा पदं चित्रं दिग्गजसंहतिं जितवती गत्या कुरङ्गेक्षणा ॥ हास्येनास्य समीपगेन ललिते नेन्दोरमन्दाश्रियं प्राणेशश्रुतिगामि नैव वचसा संसारगङ्गोकिलम् ॥ १॥ ४२॥

"स्वीया तु त्रिविधा प्रोक्ता रसशास्त्रविपश्चिता ॥ मुग्धा मध्या प्रगल्भाख्या तासां भेदोविवक्ष्यते ॥ मुग्धा तत्र च विज्ञेया नूतनोद्भूतयौवना ॥ अज्ञातयौवना ज्ञातयौवना सा द्विधा पुनः,, ॥

## ❀ मुग्धा यथा ❀

उदञ्चत्पद्मानां द्युतिनिचयमाधाय वदने

❀ नवोढा यथा ❀

प्रियं विदूरादपि वीक्ष्य न क्षणं क्षणप्रभेवस्थि रतामपेक्षते ॥ अपि प्रयत्नात्कथमस्तु सा म- नागियं विना केलिनिकेतनाऽतिथिः १४६

"सैवक्रमशोविश्रब्ध नवोढा प्रश्रयादिह ॥ उदाहरणमस्यास्तु साम्प्रतम्प्रोच्यते स्फुटम्,,

❀ विश्रब्धनवोढा यथा ❀

सम्मीलितं नयनयुग्ममुरोजयुग्मं पा- णिद्वयेन पिहितं कृत ऊरुबन्धः ॥ नीवीगु णं वत दधाति कथं सुलज्जा शय्याश्रितेति कुरुते बहु चित्तवृत्तिम् ॥ १ ॥ ४७ ॥

"समानलज्जामदना मध्या च समुदीरिता ॥ इयमेवातिविश्रब्धनवोढातीवसंश्रयात्" ॥

❀ मध्या यथा ❀

भर्तुर्न्निमीलितदृशो मुखमायताक्षी सञ्चुम्बि तुं कृतवती वदनं विनम्रम् ॥ दृष्ट्वा तदीय मधुरस्मितमाससज्ज लज्जाम्बुधौ नयन

१ आङ् पूर्वकस्य ष्वञ्जधातुबुसङ्गतावित्यस्य लिटिरूपम् ॥

प्रियवाचमुद्गिरन् ॥ व्रजन्ति किन्द्रागपि सन्निधिस्थितिं समुज्झितं पुष्पचयं मधुव्रताः ॥ १ ॥ ५१ ॥

"धीराऽधीरा तु मध्याख्या वचसारुदितेन च ॥ सन्निवेदयति क्रोधं प्रिये सद्यस्तथाविधे" ॥

❀ मध्याधीराऽधीरा यथा ❀

धन्योऽसि नाथ भुवने कृतिनाङ्गणेषु गण्योऽसि शोणकमलायतलोचनोऽसि ॥ इत्यानतीकृतमुखी परिभाषयन्ती तूष्णीममुञ्चदवनौ नयनाम्बुबिन्दून् ॥ १ ॥ ५२ ॥

"रतौदास्यं वितनुते याऽपराधं गते प्रिये ॥ प्रौढाधीरा तु सा ज्ञेया चाधीरा तर्ज्जनादिकम्" ॥

❀ प्रौढाधीरा यथा ❀

हास्यं नास्यसरोरुहे नयनयोर्न्नैवाञ्जनं रञ्जनं नैवोक्तिर्ललिता क्रियासु जड़ता लीलासु विद्वेषिता ॥ इत्थं हन्त यदर्ज्जितं बहुविधं कान्ते रुषोलाञ्छनं तत्सर्वं तव नि

एकत्रस्थितयोः सरोरुहदृशोर्भूयोविरुद्धाक्षरं जल्पन्त्योश्चतुरः समेत्य सविधं स्थित्वा स किञ्चित्क्षणम् ॥ एकस्यानयने पिधाय निभृतं पाणिद्वयेनादरात्स्वच्छन्दं परिचुम्बति स्म वदनं कान्तः परस्यास्तदा ॥१॥५६॥

"गुप्तं प्रेम सदा यस्या वर्त्तते परनायके ॥ परकीया समाख्याता सैव काव्यविशारदैः"

❀ परकीया यथा ❀

प्रचलति पथि पिशुनाली नहि पुनराली जनः सविधे ॥ दयिते निवसति दूरे तुदतु क्रूरेषुभिर्मदनः ॥ १ ॥ ५७ ॥

"रतिसङ्गोपना रुष्टा विदग्धा द्विविधा मता ॥ लक्षितानुसयाना च मुदिता कुलटा पुनः ॥ एतासां परकीयायामन्तर्भावः समीरितः ॥ प्रोच्यते स विशेषेण तदुदाहरणानि च" ॥

❀ रतिसङ्गोपना यथा ❀

बन्धूकभ्रमतोममाधरदलं सङ्खण्डितं षट्-

विधुमण्डलं विदुषी ॥ १ ॥ ६१ ॥

❀ लक्षिता यथा । ❀

वक्षोरुहे सुमुखि ते नखरस्य रेखा केषामियं नहि करोति मनोविनोदम् ॥ केलिच्युता चिकुरसीम्नि विशालमाला बाले सितासितधियं हृदये तनोति ॥ १ ॥ ६२ ॥

❀ अनुशयाना यथा । ❀

करे समाधाय रसालपल्लवं विशालपुष्पावलि मण्डितोरसम् ॥ निरीक्ष्य गोपालमुपागतं सखी समक्षमम्भोजमुखी विषीदति ॥ १ ॥ ६३॥

❀ मुदिता यथा । ❀

गृहपतिमतिदूरङ्गन्तुकामं निरीक्ष्य प्रियतममनुसङ्गं निर्भयं चिन्तयन्ती ॥ मुहुरपि गुरुमध्ये शोकजासच्छलेन त्यजति सरसिजाक्षी मोदजातोदविन्दून् ॥ १ ॥ ६४ ॥

---

१ । जारमुकस्य ॥

## ❀ स्नेहगर्विता यथा । ❀

माकृथाः सखि वृथा परिश्रमं शारदेन्दुमु
खि हारगुम्फने ॥ वीक्ष्य लग्नमपि चन्दन
द्रवन्दूयते हि विरहीव केशवः ॥ १ ॥ ६८ ॥

## ❀ सौन्दर्य्य गर्विता यथा ❀

सखि यास्यामि सरस्यां तत्र न कस्यापि
भाषितैर्बहुभिः ॥ मुखमभिवीक्ष्य सशोका
विलपति कोकावली परितः ॥ १ ॥ ६९ ॥

## ❀ मानिनी यथा । ❀

कृशाकारास्ताराः प्रविलपति पारावतकुलं
गृहोपान्ते कान्ते दधति कलविङ्काः कलक
लम् ॥ समीक्ष्य त्वामम्भोरुहमुखि सुरम्भोरु
विकलां त्रियामापि क्षामा शिव शिव रुषं

---

१ । दूङ्परितापे दिवादिः ।

२ । चक्रवाकावली । कोकश्चक्रश्चक्रवाकोरथाङ्गा ह्वयनामक इत्यमरः ॥

३ । कपोतसमूहः । पारावतः कलरवः कपोत इत्यमरः ॥

४ । चटकाः । चटकः कलविङ्कः स्यादित्यमरः ॥

ऽऽनना वक्षोनिर्गतशङ्करो च नियतं नेत्रा म्बुना सिञ्चति ॥ हित्वा सा खलु मञ्जुलानि चिरतस्तल्पानि शेतेऽवनावित्थं त्वन्मिलनेच्छया यदुपते तीव्रं तनोति व्रतम् ॥ १ ॥ ७२ ॥

❀ यथावा। ❀

इन्दुं निन्दति कैतवेन वचसा श्रीखण्डखण्डद्रवं दूरादेव निरीक्षते नहि तनौ धत्ते गुरूणाम्भिया ॥ तल्पं पल्लवनिर्म्मितं प्रणमति स्वापस्य नापि क्षणं व्यापारं वितनोति तत्र सुमुखी राधापते त्वत्कृते ॥२॥७३॥

"प्रेयसा वञ्चितं दृष्ट्वा शङ्कितं पूर्वकल्पितम् ॥ याविषीदति साचेह विप्रलब्धाप्रकीर्त्तिता॥"

❀ विप्रलब्धा यथा ❀

अये भ्रातर्भृङ्ग प्रतिविटपिशृङ्गं निवसता तिरोभूतोऽरण्ये ललितमृगवन्येन भवता ॥ स कृष्णः सन्दृष्टः क्वचिदपि च दृष्टो विहर-

रेणीदृशोजल्पितं श्रुत्वेदं मधुसूदनेन वदनं नम्रीकृतं व्रीड़या ॥ १ ॥ ७६ ॥

❀ यथावा । ❀

सम्प्राप्तस्य च वल्लभस्य नयनं शोणार-विन्दायितं वक्षोवीक्ष्य विपक्षपङ्कजदृशो व क्षोरुहेणाङ्कितम् ॥ नास्रूं किञ्चिदमुञ्चदि न्दुवदना सद्योगुरूणाम्भिया स्वैरं स्वैरमियं चकार विपुलश्वासैःकदुष्णादिशः ॥२॥७७॥

"सुशङ्कितस्थले भर्तुरनागमनकारणम् ॥ यातुचिन्तयति क्षुब्धा सोत्का कविभिरीरिता।

❀ उत्का यथा ❀

गता न हरिसन्निधिं किमु विधे सखी म न्मथश सएव रुषितोऽधुना वत किमस्ति य-न्नागतः । इति प्रचललोचना रहसि चिन्त यन्ती भृशं सरोविगलदश्रुणः कृतवती सरो जानना ॥ १ ॥ ७८ ॥

❀ यथावा ❀

मि नोष्माकुला सञ्जल्प्येति चकार चारुश
यनं दूरे कुरङ्गेक्षणा ॥ उद्भूता मम साम्प्रतं
च वपुषि स्वेदाम्बुनोबिन्दवो व्याजेनेति
बहिर्गृहस्य दयितं द्रष्टुं जगामानिशम् ।२।८१

"अवमत्य प्रियं पश्चात्परितप्ता विषीदति ॥
कलहान्तरिता सेह कविभिस्समुदीरिता ॥"

## ❀ कलहान्तरिता यथा ❀

गते कान्ते कोपं कलयति कलं कोकिल
गणे मुदारण्ये भृङ्गे विदधति मुहुर्गुञ्जितभ
रम् ॥ स्मरे हन्तक्रूरे विषमविशिखं कुर्वति-
करे समाचक्षे कस्मै निजहृदयदुःखं सुकु
तिने ॥१ ॥ ८२ ॥

## ❀ यथावा ❀

यस्य प्राणपतेः कृते प्रतिदिनं भीतिर्गुरो
रुज्झिता वृद्धस्यातिविरुद्धजल्पितमपि स्व
च्छन्दमङ्गीकृतम् । दृष्टं कष्टमशेषकाननलस-
कुञ्जादिकुञ्जालयं कोपस्तत्र विकाशितस्स
खि मया धिक्चेष्टितं वेधसः ॥ २ ॥ ८३ ॥

"स्वाधीनस्तुपतिर्य्यस्याःस्नेहसौन्दर्य्यहेतुभि
स्वाधीनपतिका सेह कविभिस्समुदीरिता ॥,

❀ स्वाधीनपतिका यथा ❀

किं युवा न सखि वा सुलोचने कामिनी
किमुत नावनीतले ॥ किन्निदान[1]मिह दान
वारिणा त्यज्यते मम न गेहदेहली ॥१॥८४॥

❀ यथा वा ❀

वसन्तु धरणीतले सखि परे युवानोजना
मनागपि मुरद्विषोन कलयन्तु साम्यम्पुनः ॥
मया गुरुभियानिशं यदपि हन्त सर्व्वाँरित
स्तथापि मम सन्निधिं त्यजति नो सुरेशा-
नुजः ॥ २ ॥ ८५ ॥

"तात्कालोचितवेषातुयाचापिसरतिप्रियम् ॥
रसशास्त्रविदाचात्रकीर्तितासाभिसारिका "

❀ अभिसारिका यथा ❀

---

१ । कारणम् ॥

यन्तारं[1] परिकल्प्य दर्पकमसौ[2] स्वान्तं हयं चोन्नतं प्रीतिं चारुकशां[3] निशां सहचरीं चञ्च द्रथं सत्पथम् ॥ खेलद्बालकुरङ्गलोचनचम त्कारापकारीक्षणा स्वैरं स्वैरमुदाररङ्गभवनं सङ्गच्छति प्रेयसः ॥ १ ॥ ८६ ॥

❀ यथा वा ❀

उदिते शशिनि विशदवरवसना हसित-विशोभितसुललितदसना ॥ मलयजकुसुम विभूषितकाया प्रियमभिगच्छति मदन-सहाया ॥ २ ॥ ८७ ॥

"गन्तुमुत्कण्ठितोयस्याःप्रियोदेशान्तरम्प्रति सा प्रोष्यत्पतिका प्रोक्ता रसशास्त्रविशारदैः"

❀ प्रोष्यत्पतिका यथा ❀

---

१। सारथिम् । नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिरित्यमरः ॥

२। कामदेवम् ॥

३। मनोज्ञामश्वादेस्ताडनीं रज्जुम् । अश्वादेस्ताडनी कशेत्यमरः ॥

प्रातः कार्य्यवशात्कृशाङ्गि दयिते यास्यामि देशान्तरं श्रुत्वेदं कुलिशाभिघातसदृशं तीव्रव्वँचः प्रेयसः ॥ नोक्तं किञ्चिदमन्दपङ्कजदृशा प्रेम्णे मनोजन्मने दत्तं चासूमजसूमञ्जनातिलैः सार्द्धम्पयः केवलम् । १ । ८८

## यथावा ।

समन्तात्संजाते वनभुवीत्यादि ॥ २ ॥

"सागसि प्रियतमे या तु हितमाचरतिस्फुटम् सैवोत्तमासमाख्याताकाव्यशास्त्रेमनीषिभिः„

## ❀ उत्तमा यथा ❀

नीता निशा सह मया यदि नादरेण किन्तेन नाथ हृदये ह्रियमातनोषि ॥ इत्थं निगद्य मृगशावदृशाऽभिरामैः साचिस्मितैरपहितोदयितापराधः ॥ १ ॥ ८९ ॥

"अपि प्रियकरे कान्ते याऽप्रियाप्रियकारिणी मध्यमासाचसम्प्रोक्ताकाव्यशास्त्रेविपश्चिता„

१ । लज्जाम् ॥

❀ मध्यमा यथा ❀

कोपिन्याः पदलक्ष्मणाभिवलितं वक्षोज-
युग्माङ्कितङ्कान्तव्वीक्ष्य विदूरतश्च सुदृशा
दृष्टिर्दिवि स्थापिता ॥ सम्प्राप्ते पुनरन्तिक
ञ्च दयिते काकुव्रजव्याकुले सानन्दं स्मित
धोरिणीभिरभितश्शुभ्रीकृतोर्वी द्रुतम् ।१९०।

"कान्ते प्रियकरे या च भृशं कोपपरायणा" ।
सैवाधमासमाख्यातापतिसन्तापकारिणी" ॥

❀ अधमा यथा ❀

येन स्वल्पगतेन नापि वनिता सम्भाषि
तान्यादृता भूयोयेन तवाभिलाषनिचयः
सर्वत्र सम्पादितः ॥ तस्मिन्नेव निरागसि
प्रियतमे कोपस्समारोपितो धिक्त्वामस्तु सु-
लोचनेऽथ बहुलं वाचा किमावेदये॥१॥९१॥

"परिहासमुपालम्भन्तथाशिक्षां च मण्डनम्
याकरोति मुदा सा तु सखीह समुदीरिता" ॥

❀ परिहासोयथा ❀

कुब्जानुरागिमनसोमधुसूदनस्य प्राणप्रि

याऽसि सरलाऽसि किमालि चित्रम् ॥ इत्थ
न्निशम्य वचनं कुतुकात्सखीनां साऽत्राजि-
तास्मितमुखी नितराम्बभूव ॥ १ ॥ ९२ ॥

❀ उपालम्भोयथा ❀

लीलालतागृहवरे सहसा गतायाः फुल्लार
विन्दपरिनिन्दकलोचनायाः ॥ पञ्चाशुगा
शुगचयेन विदारितायाः कोऽयङ्क्रमस्तव स-
खे कुरुषेऽपमानम् ॥ १ ॥ ९३ ॥

❀ शिक्षायथा ❀

सख्याँहि याहि मधुसूदनसन्निधाने माने
न तत्र चरणे सखि पातयेथाः ॥ इत्थम्मुहुः स
हचरीम्परिभाषयन्तीं लीलाम्बुजेन सुमुखी
निभृतञ्जघान ॥ १ ॥ ९४ ॥

❀ मण्डनय्यँथा ❀

ललिता लक्तकरेखानिचयमिषाद्दयितमा
नतं सुदृशः ॥ चरणनखे विलिखन्ती विह

(१) कुतूहलात् । कुतुकञ्च कुतूहलमित्यमरः ॥
(२) कन्दर्पबाणसमूहेन ॥

सति मुदितालिका निभृतम् ॥ १ ॥ ९५ ॥

"सङ्घट्टनपरा चाद्या विरहाधिनिवेदना ॥

दूतीचद्विविधाख्याताकविना काव्यनाट्ययोः"

❀ सङ्घट्टनकारिणी दूती यथा । ❀

विकिरति सघनवने बहुनीरम्मुहुरपि कल यति स्वमतिधीरम् ॥ स्मर सरसीरुहमुखि निजवचनन्त्यजसि किमालि हरिं रतिवचनम् ॥ १ ॥ ९६ ॥

❀ विरहनिवेदना दूती यथा । ❀

कृतनलिनीदलशयना मुञ्चति नयनाम्बुनोनिचयम् ॥ तव विरहे सति राधा मुरहर बाधाभरन्तनुते ॥ १ ॥ ९७ ॥

इत्यालम्बनविभाव वर्णने नायिका निरूपणम् ॥

# अथ नायक वर्णनम् ॥

"पतिश्चोपपतिश्चैव वैशिकश्चतथापरः ॥
नायकस्त्रिविधः प्रोक्तोरसशास्त्रविपश्चिता
पाणिङ्गृह्णाति यत्नेन विधानैः श्रुतिसम्मतैः ॥
पतिः सएव सम्प्रोक्तः सकलैः कविकोविदैः,,॥

## ❀ पतिर्य्यथा ❀

शार्दूलद्विपचर्म्मसु प्रियतमा स्थाप्या न चापि क्षणन्तल्पम्पल्लवकल्पमत्रभवने कुत्रास्ति भिक्षाशिनः॥ इत्यालोच्य चिराय चारुहृदयः शैलाधिराजात्मजामङ्के सर्व्वांनिधाय देव भवताभव्याय भूयाच्छिवः ॥ १ ॥ ९८ ॥

" अनुकूलस्तुसम्प्रोक्तोदक्षिणोधृष्टएवच ॥
शठश्चकाविभिः काव्ये पतिरेव चतुर्व्विधः ॥
एकनारीव्रती यस्तु परनारीपराङ्मुखः ॥
अनुकूलस्तुविज्ञेयः श्रेष्ठः सर्वजनादपि,, ॥

## ❀ अनुकूलोयथा ❀

पारीन्द्राहिकरीन्द्रशीलितवनं[1] यास्ये कथ ञ्जानकीन्नीत्वेमामथ हन्त कुत्र नयने धास्ये तदास्याहृते ॥ इत्यालोच्य चिराय चेत सि तदा सन्देहदोलायितो रामः पङ्कजचारु लोचनयुगे द्रागम्बुबिन्दुन्दधौ ॥ १ ॥ ९९ ॥

"निजपत्नीषु सर्वासु यस्यस्नेहोदयस्समः ॥
सएव दक्षिणः प्रोक्तः कविना च मनीषिणा„॥

❀ दक्षिणोयथा । ❀

एतासु क्षिति[2]भृत्सुतासु नियतं तुल्योनुरागोदयो दास्ये नारदलब्धपाणिकुसुमङ्कस्यै न कस्यै पुनः ॥ इत्थं चेतसि चिन्तयन्क्षणमथ स्वर्गाधिपस्थापितं श्रीकृष्णोवरपारिजातमुदितंहर्तुञ्चकारोद्यमम् ॥ १ ॥ १००॥

"कृतदोषोपिनिश्शङ्कोवारितश्चाप्यवारितः ॥
धृष्टस्सएवसम्प्रोक्तस्त्रपात्यक्तकलेवरः„ ॥

(१) पारीन्द्रः सिंहः ॥ सिंहेपारन्द्रपारीन्द्रौ इतिशब्द भेदः ॥ पारिन्द्रश्चाहिश्चकरीन्द्रश्च पारिन्द्राहि करीन्द्रास्तैः शीलितश्चतंद्वनम् ॥

(२) राजकन्यासु ॥

❀ धृष्टो यथा। ❀

निष्कासितोऽपि सविधाद्बहुधा सखीभि
स्सम्भर्त्सितोऽपि विषमैरनिशं वचोभिः॥ कु-
र्वन्नयं बहुवेषधरो विधत्ते गेहं समेत्य पुनरे
व कुतूहलानि॥ १॥ १०१॥

"नारीविषयकव्याजकोविदः शठउच्यते,,॥

❀ शठो यथा। ❀

आगत्य केलिभवनान्निभृतम्प्रियायाः पा-
णिद्वयेन कलयन्नयनापिधानम्॥ कोयं स-
खीति सुदृशः परिभाषयन्त्या धूर्तश्चुचुम्ब
वदनाम्बुरुहाश्चिराय॥ १॥ १०२॥

"आचारहानिकरणः पतिश्चोपपतिःस्मृतः,,॥

❀ उपपतिर्यथा। ❀

नाप स्वापं गृहपतिरसौ जातरोजातरोषा
निद्रान्न द्रागपि वत गता नागता सा त्रि
यामा॥ गच्छ स्वच्छक्षणमिति सखे सङ्कॅप

(१) क्रूरैः॥

(२) विनीतम्। निभृतविनीतप्रश्रिताःसमा इत्यमरः॥

न्याः प्रियायाः पातुं हातुञ्चँदनकमलं नापि दक्षोमुरारिः ॥ १ ॥ १०३ ॥

"बहुवेश्योपभोगीयस्सएववैशिकोमतः
सपुनस्त्रिविधःप्रोक्तश्चोत्तमोमध्यमोऽधमः,,

## ❀ वैशिको यथा । ❀

पश्यामि नैव भवने हरिणायताक्षीङ्कुत्रापि हन्त धनिना न गता परेण ॥ इत्थव्विँचिन्त्य हृदये वरवारवध्वा द्वारान्तिके वितनुते दयितोविषादम् ॥ १ ॥ १०४ ॥

" दयिताङ्कोपवर्तीन्दृष्ट्वाऽप्युपचारपरायणः ।
उत्तमः सतुसम्प्रोक्तः कविभिःकाव्यदर्शिभिः,,॥

## ❀ उत्तमोयथा ❀

अन्तःकोपकषायिताव्विँधुमुखीमुद्वीक्ष्य दूरादसौ मन्दम्मन्दमुपेत्य केलिभवनङ्कृत्वा विनम्रं शिरः ॥ साशङ्कं निभृतेन भालफलके खेलतत्कुरङ्गीदृशः कस्तूरीतिलकव्विँलिख्य नितरामानन्दमाविन्दति ॥१॥१०५॥

(१) चतुरः ॥ दक्षे तु चतुरपेशलपटव इत्यमरः ॥

"प्रियाञ्चकुपितान्दृष्ट्वा नानुरागन्नवारुषम् ।
प्रकाश्यतेसएवात्र मध्यमःकविभाषितः„ ॥

## ❀ मध्यमोयथा ❀

नयनयोरधुनैव सुशोणिमा त्वदधरेण वरोरु समर्पितः ॥ कचचयेन कदा निजबन्धनं वद वचोनिचये सुतनोधृतम् ॥१॥१०६॥

"त्रपया कृपया त्यक्तः क्रीड़ायामतिदारुणः ॥
कविना च समाख्यातः सएवाऽधमनायकः„ ॥

## ❀ अधमो यथा ❀

गणयति बहुविधदोषन्नहिपरितोषं क्षणम्भजते । कलयति गतापराधामपि बहुबाधामयीमधमः ॥ १ ॥ १०७ ॥

"अन्तर्भूतः शठो ज्ञेयोमानी च चतुरोद्विधा ।
वचोव्यङ्ककरश्चैव चेष्टाव्यङ्ककरस्तथा„ ॥

## ❀ मानी यथा ❀

पियूषद्रवशिक्षया तव सखे वागेव सन्निर्मिता स्वान्तं तावकमश्मभिर्विरचितं दुश्चे

तसा वेधसा ॥ इत्याकर्ण्य मृषाभिमानव-
लिनः कान्तस्य सङ्गच्छतः साशङ्कं मृगशा-
वसुन्दरदृशा सद्योगृहीतम्पदम् ॥१॥१०८॥

❀ वाग्व्यङ्गकरश्चतुरोयथा ❀

मा व्रज यमुनातीरं सम्प्रति नीरेच्छया
सहसा ॥ सवितरि नभसि करालेे कोऽपि
न बाले बहिर्व्रजति ॥ १ ॥ १०९ ॥

चेष्टाव्यङ्गकरश्चतुरो यथा ।

विदधति मदनाकारं हृदि रतिपारङ्गमे
दयिते ॥ कलयति लीलाकमलं मुहुरपि कर-
मुद्रितन्विदुषी ॥ १ ॥ ११० ॥

"पतिश्चोपपतिश्चैव तथा वैशिकनायकः ।
प्रोषितोऽपिभवत्यत्र तदुदाहृदयेक्रमात् ॥"

❀ प्रोषितः पतिर्य्यथा ❀

इति विचिन्त्य चिरं रघुनन्दनोमुहुरसि-

(१) मिथ्याभिमानयुक्तस्य ॥

(२) सूर्य्ये ॥

(३) भीषणे ॥ करालोदन्तुरेतुङ्गेभीषणे इतिमेदिनी ॥

ञ्चदुरोनयनाम्बुभिः॥ जनकराजसुता हृद यस्थिता भवतु मा विरहानलतापिता॥१॥१११

❀ प्रोषितउपपतिर्य्यथा ❀

यदकृत गुरुजनभीता पथि सुविनीताऽवलोकनं स्वैरम् ॥ सम्प्रति तदेव दीनं कलयति लीनम्मनोविरहे॥ १ ॥ ११२ ॥

❀ प्रोषितवैशिको यथा ❀

निश्शङ्कमङ्कगतया हरिणायताक्ष्या स्मेर व्विंधाय परिहाय सखीय्यँदुक्तम्॥ दूरास्थितोऽपि चिरतोविधिवञ्चितोऽपि भूयस्तदेव हि सखे हृदये स्मरामि ॥ १ ॥ ११३ ॥

"अङ्गहारादिना किञ्चिन्न वेत्ति तरुणीमनः। अनाभिज्ञःससम्प्रोक्तःकविभिःकाव्यसूरिभिः,,॥

❀ अनाभिज्ञो यथा ❀

केलीमन्दिरसन्निधौ सखि मया स्मेर व्विंधायानिशं लीलामञ्जुलपङ्कजेन निहतोदूरीकृतोव्रीडया ॥ चक्षुश्चारुनिरीक्षणेन

बहुशः संसेवितोऽप्यानतो भूमावेषनखैर्लिले
ख ह्निभृतं कस्यास्ति न दूषणम् ॥१॥ ११४ ॥
"एतेषां नर्म्मसचिवः कीर्त्तितश्च चतुर्विधः ॥
पीठमर्दोविटश्चैव चेटकश्चविदूषकः ॥
पीठमर्द्दस्तु विज्ञेयः कुपितस्त्रीप्रसादकः„ ॥

## ❀ पीठमर्दो यथा ❀

मा विमुञ्च रुषमानतानने लोचने च क
ल्य प्रकाशिते ॥ चञ्चदेणनिचयः सरोरुह
ङ्कुर्वदुर्विधतया विषीदतु ॥ १ ॥ ११५ ॥
"कामाधिककलातन्त्रकोविदोविटउच्यते„ ।

## ❀ विटो यथा ❀

कामोनाम समाजगाम सुरभौ भूमीश्व-
रः कानने स्वच्छन्दं त्वरितं च केलिनिच-
य ङ्कुर्वन्तु सर्वे जनाः ॥ इत्याज्ञापनपत्र-
निर्गतवचोभूयः पिके जल्पति प्रायोनैव वि
भेषि तन्वि दयितं यन्नैषि पञ्चानने ॥ १ ॥ ११६
"सन्धानचतुरोयस्तु चेटकः समुदाहृतः „ ॥

(१) वसन्ते ॥

❀ चेटको यथा ❀

केलीवनेषु मधुसूदन सन्निधाने पद्मा भिरामनयना समुपागताऽसौ॥ दृष्ट्वेति चारुकुसुमावचयच्छलेन स्थानान्तरं सहचर स्समुपेत्य तस्थौ ॥ १ ॥ ११७ ॥

"हास्यञ्चयेनकेनापि कारयन्ति विदूषकाः,,॥

❀ विदूषको यथा । ❀

श्यामेन हन्त दयितेन समम्प्रयासि श्यामा भविष्यसि सुकेतकगर्भगौरि ॥ इत्थं निशम्य वचनानि विदूषकस्य साचिस्मित ङ्कृतवती निभृतेन राधा ॥ १ ॥ ११८ ॥

# इतिविभावनिरूपणम् ॥

❀ अथ भावोनिरूप्यते ❀

"रसानामनुकूलोयोविकारोभावउच्यते ॥
सपुनर्द्विविधः प्रोक्तः शारीरश्चान्तरस्तथा,
( विकारस्त्वन्यथा भावः ॥ )
येत्त्वसात्विकनामानःशारीरास्तेप्रकीर्त्तिताः

स्थायीचव्यभिचारीचकविभिश्चान्तरस्थितः॥
सत्वञ्चजीववान्देहस्तस्यधर्म्मास्तुसात्विकाः॥
व्यभिचारीप्रभृतयश्चान्तरानतु सात्विकाः,,॥

❀ के ते पुनः सात्विकाः ❀

"स्वेदस्तम्भोऽथ रोमाञ्चःस्वरभङ्गोऽथ वेपथुः॥
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकामताः,, ॥

❀ स्वेदोयथा। ❀

पत्रावलीं रतनोवितनोतु का ते भाले कपोलफलके विमले च भूयः॥ केनापि चाद्य जनितेन हृदिस्मृतेन स्वेदाम्बुनैव परिलुम्पसि तां यतस्त्वम्॥ १ ॥ ११९ ॥

❀ स्तम्भोयथा ❀

आयाति देवि कुशली रघुवीरनामा श्यामाम्बुवाहरुचिरस्तव जीवनाथः॥ इत्यादरान्निगदिते कपिराजदूते स्तम्भावरुद्धतनुराशु बभूव सीता ॥ २ ॥ १२० ॥

❀ रोमाञ्चोयथा ❀

तत्रागतः सुमुखि वारिधराभिरामोदामोदरोवदनपङ्कजमीक्षितुन्ते[1] ॥ इत्यादरेण वचनव्विँनिशम्य वामा रोमाञ्चकैश्च कुसुमैर्वपुरञ्चति स्म ॥ ३ ॥ १२१ ॥

❁ स्वरभङ्गोयथा ❁

हरिकथासु वृथा चतुरेऽधुना कलयासि प्रमदव्रजगोपनम्[2] ॥ हृदयभावचयस्तवगद्गदस्वरवरेण वरोरु निवेदितः ॥ ४ ॥ १२२ ॥

❁ वेपथुर्य्यथा ❁

दूरागतेन दयितेन निरीक्षितायाः पङ्केरुहायतदृशोगुरुमध्यगायाः ॥ सद्यः सुहृद्यरसनारव[3]कैतवेन कम्पोजगाद कुशलं भृशलज्जितायाः ॥ ५ ॥ १२३ ॥

❁ वैवर्ण्यय्यँथा ❁

चाणूरं मदशालिनं कुवलयापीडं निपी-

(१) द्रष्टुम् ॥

(२) हर्षसमूहगोपनम् । मुत्प्रीतिःप्रमदोहर्ष इत्यमरः ॥

[३] मेखलाशब्द व्याजेन ॥

ञ्याचिरात्कंसध्वंसविधिंविधाय भगवान्न
न्दालयन्नागतः ॥ इत्याकर्ण्य कुवर्णशीलि
तवचः स्वर्णारविन्दानना वैवर्ण्यंव्रजवल्लभ
स्य वनिता सद्यस्तनौ सन्दधौ ॥६॥ १२४ ॥

## ❀ अश्रुपातोयथा ❀

दूरस्थितञ्च दयितं समुपागतञ्च दृष्ट्वाऽ
श्रुबिन्दुनिचयः सुतनोः पपात ॥ शङ्क तदी
यरुचिराक्षियुगेन सद्योनीलाञ्जलिश्च विरहा
य महानदायि ॥ ७ ॥ १२५ ॥

"प्रलयस्सुखदुःखाभ्याञ्चेष्टाज्ञाननिराकृतिः"

## ❀ प्रलयोयथा ❀

परस्पराश्लेषनिवद्धगात्रयोः क्रिया ह्रिया
सार्द्धमहो बहिर्गताः ॥ ध्रुवं मनस्तीव्रविषा
भिसङ्कुलैः स्मरेण यूनोर्निहतं शिलीमु-
खैः ॥ ८ ॥ १२६ ॥

## ❀ अथ स्थायीभावोनिरूप्यते ॥ ❀

यथोक्तम्भरतेन ॥

"सजातीयविजातीयैर्य्योभावैर्न्न पिधीयते
सोऽन्यभावात्मभावत्वग्राहकःस्थायिशब्दभा
अभिव्यञ्जकवैकल्यादसम्पूर्णोभवत्ययम् ।
विभावादिश्चविद्वद्भिरभिव्यञ्जकउच्यते ॥
रतिश्शोकस्तथाहासःक्रोधोत्साहौभयन्तथा ॥
"जुगुप्साविस्मयश्चैव स्थायिनोनवमःशमः ॥
मनोनुकूलेष्वर्थेषु सुखसँव्वेदनं रतिः,, ॥

## ❀ रतिर्य्यथा ❀

भवति यदपि तप्तन्दुर्ज्जनेनानलेन प्रचुर गुरुघनेन स्वेच्छया ताडितञ्च ॥ स्वजननिकषमध्ये किञ्चिदप्याञ्चितन्तत्त्यजति न रुचिरत्वं सुभ्रुवऽप्रेमहेम ॥ १ ॥ अत्र किञ्चिदप्यनेनाप्तार्त्तिः ॥ १२७ ॥

"इष्टनाशेनचित्तस्य विकृता शोकउच्यते,, ॥

## ❀ शोकोयथा ❀

किङ्कुञ्जेष्वलिगुञ्जितेन मधुरालापेन

१ । स्वजन एवनिकष ( स्वर्णादियत्नघर्षणेनपरीक्ष्यते ) स्वजनानकषस्तस्यमध्ये ॥

किम्बर्हिणां किं वा मञ्जुलपल्लवैश्च कुसुमैर्गन्धोत्तमैः शाखिनाम् ॥ इत्थं हन्त विमृष्य चेतसि चिरङ्गोपाल वृन्दावने मुञ्चन्ति वृजवल्लवाम्बुजदृशोनेत्राम्बुनः शीकरान् ॥२॥ अत्र शीकरपदादपूर्त्तिः ॥ १२८ ॥

"रागादिवैकृत्यैश्चेतोविकाशोहास्यइष्यते,, ।

## ❀ हासोयथा ❀

प्राप्ते पाणिग्रहणसमये व्यालफूत्कारजालं श्रुत्वा चक्रे सपदि गिरिजा घोरचीत्कारमुच्चैः ॥ एतदृष्ट्वा श्रुतमथ तदा श्वासनासक्तचेताः स्वैरस्मेरस्फुरितवदनश्शङ्करश्शङ्करोतु ॥३॥ अत्र स्वैरपदादपूर्त्तिः॥१२९॥

"प्रतिकूलेष्वतैक्षणस्यावरोधः क्रोधउच्यते,,॥

## ❀ क्रोधोयथा ❀

आवृतकृष्णमावीक्ष्य विपक्षहरिणीदृशा ॥ चकार किञ्चित्कुटिलं राधिका भ्रुकुटीद्वय

---

१ । विचार्य्यं ॥

म् ॥ ४ ॥ अत्र किञ्चित्पदादपूर्त्तिः ॥ १३० ॥

❀ यथा वा रौद्ररसः ❀

कृत्वा प्रौढ़प्रतिज्ञा निखिलभटपुरोवर्त्तिना येन पूर्व्वम्पीतन्दुश्शासनोरस्थलभवरुधिरं दुर्गसन्नामभूमौ ॥ सोऽहन्दुर्य्योधनस्य द्रुप दनृपसुताधर्षिणोमन्दबुद्धेः किञ्चिद्भ्रूभङ्गशीलोगिरिगुरुगदया चोरुमाचूर्णयामि ॥५॥ अत्र किञ्चित्पदादपूर्त्तिः ॥ १३१ ॥

"मनोभीष्टस्यसम्प्राप्तिरुत्साहःकविभिःस्मृतः

❀ उत्साहोयथा ❀

विश्वामित्रेण नीतो जनकनृपकृते रङ्गदेशे प्रचण्डं दृष्ट्वा कोदण्डमैशं निखिलजनपुरः सीतया वीक्ष्यमाणः ॥ प्रोदञ्चद्रोमहर्षा वलिवलिततनुर्बालवेशाभिरामोरामः किञ्चिद्विधाय स्मितमनुजमुखे चारुचिक्षेप

१ । भीमः ॥

२ । धनुः ॥

चक्षुः ॥६॥ अत्र किंचित्पदादपूर्त्तिः॥१३२॥
"भयञ्चित्तस्य वैक्लव्यं रौद्रादिदर्शनेन च,, ॥

## ❀ भयर्यँथा ❀

सायं समायान्तमुदीक्ष्य वल्लभं शून्याल-
ये कापि नवोढ़कामिनी ॥ सद्योभयात्कि-
ञ्च विशुष्यदानना गन्तुं बहिर्हन्त चका-
र मानसम् ॥ ७ ॥ अत्र किञ्चपदाद-
पूर्त्तिः ॥ १३३ ॥

## ❀ यथा वा शृङ्गारे ❀

वध्वा शैलोपलौघैरमितिजलनिधिं हेल-
यागत्य पारं वारं वारं प्रतेनुः प्रबलकपिग-
णाघोरकोलाहलं च ॥ श्रावं श्रावं समन्ता
त्तमथ निशिचरः किंच हीनाननश्रीः सा
शङ्कं स्वीयलङ्कां सह[1] कमलदृशा त्यकुमी
हाङ्करोति ॥८॥ अत्र किञ्चपदादपूर्त्तिः ॥१३४
" जुगुप्सागर्हितार्थानांदोषसन्दर्शनादिभिः

१ । सहवनितया ॥

२ । इच्छाम् । इच्छा कांक्षास्पृहेहेत्यमरः ॥

## ❀ जुगुप्सा यथा ❀

अस्तङ्गतस्य तरणेर्हरिदम्बुजाक्ष्या सार्द्धं विहर्तुममृतद्युतिमभ्युपेतम् ॥ दृष्ट्वा विधाय मुखमुद्रणमम्बुजाली कुत्सापरेव तिमिरावरणान्तरस्था ॥९॥ अत्र इवपदादपूर्त्तिः ॥१३५

"विस्मयश्चित्तविस्तारः पदार्थातिशयादिह" ॥

## ❀ विस्मयो यथा ❀

हत्वा कंसं समरजयिनं तस्य पुर्य्यान्निवासं हत्वा हा सन्ततकृतरतेश्चारुमूर्त्तेर्मुरारेः ॥ तादृङ्नान्या सपदि वनिता म्लानचित्रायिताऽभूद्राधा यादृक् शिव शिव महाक्षोभपाथोधिमग्ना ॥ १० ॥ अत्र तादृक्न पदादपूर्त्तिः ॥ १३६ ॥

## ❀ यथावा शृङ्गारे ❀

श्रुत्वा साम विभीषणस्य जलधेर्बन्धञ्च शैलोपलैरुच्चैर्वानरसञ्चयस्य परितः को

१ । सन्ततमनिशंकृतारतिर्येन तस्येत्यर्थः ॥

लाहलन्दुःसहम् ॥ श्रीमद्रामकराम्बुजाद्दृत-
धनुष्टाङ्कारमाकर्णयन्भार्य्यायाः सविधेऽभ-
वत्क्षणमसौ चित्रायितोरावणः ॥ ११ ॥ अत्र
क्षणपदादपूर्त्तिः ॥ १३७ ॥

❀ शमोयथा ❀

संसारदुर्गजलधेस्तरिङ्गनिभं हरिम् ॥
कदावृन्दावनोपान्ते पश्यामि सखि चक्षु-
षा ॥१२॥१३८॥ ❀ इति स्थायीभावः ❀
अथ व्यभिचारिभावोनिरूप्यते ॥
"विशेषेणाभितःकायेस्थायिनञ्चारयन्तिये ॥
अनुभावादिहेतूँस्तान्वदन्ति व्याभिचारिणः,,।

❀ यद्वा इति कर्णभूषणे ❀

"विनाचनियमेनापि सर्वेष्वपिरसेषु यः ॥
भावउत्पद्यतेसोऽत्र व्यभिचारी समीरितः ॥
निर्व्वेदग्लानिशङ्काख्या तथासूयामदश्रमाः
आलस्यञ्चैव दैन्यञ्चचिन्तामोहोधृतिःस्मृ
तिः। व्रीड़ा चपलता हर्ष आवेगो जड़ता तथा ॥

गर्वोविषाद औत्सुक्यं निद्राऽपस्मारएवच ॥
स्वप्नोविबोधोऽमर्षश्चाप्यवहित्थातथोग्रता ॥
मतिर्व्याधिस्तथोन्मादस्तथामरणमेव च ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ॥
त्रयस्त्रिंशदमीभावाःप्रलयान्तिरसंस्थितिम्,,

❀ "निर्वेदोजगताङ्गर्हा,, ॥ यथा ॥ ❀

वृन्दारण्यमुपासितञ्च ललिता लज्जोज्झिता यत्कृते नीतिर्दूरतरे धृता च कियती भीतिर्गुरूणाम्पुनः ॥ हित्वा सम्प्रति मां सएव यदभूत्कुब्जानुरागी हरिः संसारे सखि दुर्न्नये नहि जनः कस्यापि कोऽपि ध्रुवम् ॥१॥१३९

❀ "ग्लानिर्न्निबलता मता ॥ यथा ॥ ❀

अतनुतापभरेण मृगीदृशस्तनुरहो तनुतामतनुन्तथा ॥ व्रजति सम्प्रति हन्त हरे यथा हुतभुजा नवनीतकगोलकम् ॥२॥१४०

"शङ्काऽनीष्टविचारः स्यात्,, ॥ यथा

न्यस्तव्वँस्त्रवरञ्जले मृगदृशम्भ्रमम्पयो

१ । कन्दर्प्पतापातिशयेन ॥

भाजनव्विँक्षिप्तानि च भूषणानि नखैर्व-
क्षोरुहाविक्षतौ ॥ इत्थं सच्चरितं प्रवक्तुमधुना
काचिद्गता मातरं व्यग्रेणेति मुरद्विषाद्भुत
महो धत्तव्वँपुः शैशवम् ॥ ३ ॥ १४१ ॥

❀ "असूयाऽन्यसुखे व्यथा ॥ यथा ❀

रममाणन्तु सपत्न्या प्रियतममभिवीक्ष्य
पाणिना सुमुखी ॥ उच्चाटयति निशीथे प्र-
त्यूषःसूचकाश्चटकाः ॥ ४ ॥ १४२ ॥

❀ "हर्षोत्कर्षोमदः,, ॥ यथा ❀

कादम्बरीरसास्वाद घूर्णिताक्षोहलायु-
धः ॥ स्मेरसंशोभिवदनोवीक्ष्यते रेवती-
मुखम् ॥ ५ ॥ १४३ ॥

"खेदआयासजनितश्रमः,, ॥ यथा ॥

केशाबन्धमितः[2] पयोधरयुगे मुक्तावली
चार्पिता नीवी सय्यँमनङ्[3]कृता च ललिता

१ । यशोदाम् ॥
२ । प्राप्तः ॥
३ । बन्धनमित्यर्थः ॥

भूषा तनौ सव्वृँता ॥ किञ्चावस्थितिमागतञ्च वसनं सद्यः कुरङ्गीदृशो विश्वासस्तु तदेव केवलमसौ प्राचुर्य्यमभ्यस्यति॥६॥१४४

"कार्य्येष्वशक्तिरालस्यम्,, ॥ यथा॥

उत्थातुङ्कृतकामामपि हरिवामा महर्म्मुखे भूयः ॥ स्वापयति स्मरदूतोमृदुतरभूतोऽनिलः शीतः ॥ ७ ॥ १४५ ॥

"दीनता दुष्खसंहतिः,, ॥ यथा ॥

रे रे नीरद निर्दयान्वयमणे किन्ध्वानमातन्वता सम्प्राप्तम्भवता निधाय विपुलं कोदण्डमाखण्डलम् ॥ किञ्च प्रौढ़शराः करे तव कृताः कन्दर्पकश्रीमता विश्लेषाद्दय मेव सम्प्रति हरेः प्राणप्रयाणोत्सुकाः ॥८॥१४६

"चित्तवृत्तिस्तु चिन्ता स्यात्,,॥ यथा॥

(२३) सञ्चारञ्चाधिकमपिजना इत्यादि नाउक्तैव ॥ ९॥

---

१ । बाहुल्यम् ॥

२ । प्रत्यूषे ॥

❀ "मोहःसन्तापसञ्चयः,, ॥यथा॥ ❀

श्रीखण्डद्रवसञ्चयेन परितो रे सिञ्च कञ्जाननं प्रोद्यञ्चद्घनसारपङ्कनिचयैः किञ्चापि तामञ्चय ॥ स्वच्छन्दञ्बिसिनीदलं सनलदं रे धेयमस्यास्तनौ नित्यङ्गोपपुरे जनैरिति हरे संश्रूयते केवलम् ॥१०॥१४७॥

❀ "धृतिर्मानससन्तोषः ॥ यथा,, ❀

शून्याधिकानि वसनानि विभूषणानि सन्धाय चान्यवनिताः सुखिता भवन्तु ॥ अस्माकमम्बुरुहसुन्दरलोचनानां वृन्दावने हरिविलोकनमेव सौख्यम्॥११॥१४८॥

❀ "ज्ञानसंस्कारजस्मृतिः,, यथा ❀

(११२) यदकृत गुरुजनभीता,, इत्यादिनो क्तैव ॥ १२ ॥ ॥ ॥

❀ यथा वा ❀

(२२) नालापं तनुते न चापीत्यादिनो

१ । कमलिनीपत्रम् ॥

क्तैव ॥ १३ ॥

❀ धार्ष्ट्याभावोभवेद्व्रीडा ॥यथा॥ ❀

[ ४८ ] भर्तुर्न्निमीलितदृशोमुखमायताक्षी

त्यादिनोक्तैव ॥ १४ ॥

❀ चापल्यङ्कार्य्यशीघ्रता ॥ यथा ॥ ❀

भृङ्गासाङ्गिकदम्बकाननतले वंशीध-
रेणादराद्रासाय प्रकटीकृतोमुरलिकानादः
प्रमोदात्मना ॥ रे रे चित्त विचिन्तनानि
बहुशः कर्त्तुं किमुत्कण्ठसे नायन्तात विल
म्बनस्य समयश्चञ्चत्कुरङ्गीदृशाम्॥१५॥१४९

❀ हर्षोमनःप्रसादःस्यात् ॥यथा॥ ❀

जित्वा ह्रदे विषधरं विषमुद्गिरन्तं दृष्ट्वा
हरिम्पुलकितम्पुनरागतञ्च ॥ हर्षाऽश्रुबिन्दु
निकरैर्व्रजसुन्दरीणां पत्रावली विलुलिता
ललिता कपोले ॥ १६ ॥ १५० ॥

❀ "आवेगोसम्भ्रमःस्मृतः ॥यथा ❀

आयातोमुदितः सुबन्धुवलितः प्रान्ते पु

---

१ । अगाधजलाशये । तत्रागाधजलोह्रदइत्यमरः ॥

रोराघवोहत्वा रावणमुन्नतञ्च समरे श्रुत्वे-
ति रम्यव्वँचः ॥ काचिद्धसितमूर्द्धजा सुव
दना नीवीन्दधाना परा काचित्कज्जलव-
ञ्चितैकनयना द्रष्टुन्तमग्रे गता ॥ १७॥१५१

❀ जडता काष्टवच्चेष्टा ॥ यथा ॥ ❀

२७ साबाणीहरिणीदृशोहीत्यादिनोक्तैव १८

❀ गर्वः सर्वाधिकत्वधीः ॥ यथा ॥ ❀

६ सखि यास्यामि मरम्यामित्यादिनो-
क्तएव ॥ १९ ॥

❀ "विषादश्चित्तवैक्लव्यम्" ॥यथा॥ ❀

मुहुरपि रोदिति बालोहरिरतिकालोपिसं
जातः ॥ गमनं कुनय निदानन्नहिचेन्मानं
स साम्प्रतम्भजते ॥ २० ॥ १५२ ॥

"औत्सुक्यमभिलाषिता" ॥ यथा ॥

रेरे सखे न कुरु दुर्ज्जनवन्निशायां रावं
प्रयाणसमये वरनूपुर त्वम् ॥ पश्येयमम्बुद
निभं यदि नन्दसूनुं दास्यामि तेऽपि खलु
कान्तिकरोपलौघम् ॥ २१ ॥ १५३ ॥

❁ "चेतोनिमीलनं निद्रा ॥ यथा ॥ ❁

संश्रुत्य पथिकादेषा चरित्रं दनुजद्विषः ॥ निद्रितेव तदा राधाऽभवदामुद्रितेक्षणा ॥ २२ ॥ १५४

❁ महादुःखमपस्मृतिः ॥ यथा ॥ ❁

मुहुरपि निपतति बाला मुञ्चति लाला[2] भरं विधुरा[3] ॥ निश्वासम्परितनुते जीवति सा ते च केवलं नाम्ना ॥ २३ ॥ १५५ ॥

सुप्तस्यविषयासङ्गःस्वप्नः ॥ यथा ॥

दृष्ट्वा तल्पमुपागतम्प्रियतमम्पृष्ट्वा वचः सादरं स्पृष्ट्वा पल्लवकल्पपाणियुगलं तस्यामुना पाणिना ॥ लीलाकोपविधिर्व्विधातुमतुलं सद्यःसमुत्कण्ठितान्नापिद्रागपि मामभीक्ष्य कुटिला भद्राय निद्राऽभवत् २४ ॥ १५६

❁ बोधश्च जागरः ॥ यथा ॥ ❁

उत्थापिता विधुमुखी मधुसूदनेन लीला

---

१ । श्रीकृष्णस्य ॥

( २ ) लाला स्यन्दिनी । लेरइतिख्यातस्य । सृणिकास्यन्दिनीलालेत्यमरः ॥ तस्याभरोऽतिशयस्तम् ॥

( ३ ) दुःखिता ॥

विशालशयनाहृतसागरेण ॥ जृम्भाभरं वि धुमियं मुदिता दधाना सम्मोहयत्यनुपम ञ्वपुरूर्द्ध्वबाहुः ॥ २५ ॥ १५७ ॥

## परगर्वक्षयकरीसमीहाऽमर्षउच्यते

❀ ॥ यथा ॥ ❀

नचेदुच्चैः क्रुद्धोयदि च मयि वृद्धोहितवचाः सहायोमे कश्चित्पथि पथविपश्चिद्यदि भवेत् ॥ व्रजं तूर्णं हित्वा मधुनगरमित्वा सखि तदा नतं कुर्य्यां कुञ्जाहृदयमदमञ्जो पतिपुरः ॥ २६ ॥ १५८ ॥

## ❀ "अवहित्थान्यवर्चासिस्तिरस्कारःसमीरितः ॥ यथा ॥ ❀

कंसोनाम दुराशयोहि जगतां शास्ता नराशीश्वरश्चापलयन्न च कार्य्यमत्र भवता तस्मादकस्मादपि ॥ नन्दस्योक्तमिदं वचो नयमयं संश्रुत्य लीलामृगन्धावन्तं परिप-

(१) मथुराम् ॥

(२) पद्मापतिपुरः ॥

श्यतिस्म मधुरास्मेराभिरामोहरिः ॥२७।१५९।

❀ "औग्र्यान्निष्कृपताज्ञेया,, ॥यथा॥❀

गोपाङ्गना कथयति ध्रुवजल्पनापि भूयस्तवैव परितश्चरितं वनस्य ॥ इत्थं पुनर्यदि शृणोमि हरे तदानीन्नेष्यामि तात खलु दुस्सहबन्धनानि ॥ २८ ॥ १६० ॥

❀ "समर्थचिन्तनंमतिः,, ॥यथा॥ ❀

धन्या गोकुलसञ्ज्ञिकापि नगरी धन्या तु वृन्दाटवी धन्या रम्यकलिन्दजोच्चलहरी धन्या दशा शैशवी ॥ धन्या बल्लववल्लभापि यदियं ध्येयं सदायोगिनां खेलन्तं शिशुलीलया मधुरिपुं स्वच्छन्दमालोकते ॥ २९ ॥ १६१ ॥

"उपदेशश्चसन्देश उपालम्भनमेवच ॥
अनुनयोमतावेव चान्तर्भूतोविशोभते,, ॥

## ❀ उपदेशो यथा ❀

परिहर खलोपदेशं सपदि निदेशं च वृ-

(१) प्राप्स्यामि ॥

न्द्रानाम् ॥ व्रज सखि मुरहरशयनं कुरु कुरु नयनं तमीक्षितुं चपलम् ॥ ३० ॥ १६२ ॥

❀ सन्देशो यथा ॥ ❀

पान्थ भ्रातर्ललितवचसा श्रीमता मन्त्रि देशादित्थं कुब्जाभवननिवसन्माधवः प्रार्थनीयः ॥ हत्वा कंसं सपदि भवता कुण्ठ नोत्कण्ठितेन त्यक्त्वा तस्य प्रणयवनिता श्रेष्ठिताः किं गृहीताः ॥ ३१ ॥ १६३ ॥

❀ उपालम्भनर्य्यथा ॥ ❀

अयि पयोनिधिवंशमणे विधो शृणु मनागि दमेकमनावचः ॥ विधिकृतस्य च शीतकर स्य ते समुचितानहितापकरप्रथा॥३२॥१६४॥

❀ अनुनयोयथा ॥ ❀

[ १६ ] बाले काले स्मरनरपते,, इत्यादिनैवो क्तः ॥ ३३ ॥

❀ "व्याधिःकामज्वरोज्ञेयः,,।यथा ❀

( २८ ) रे रे सिञ्च न किञ्चदम्बुजमुखी

मित्यादिनोक्तएव ॥ ३४ ॥

❀ यथावा ❀

श्वसितमुष्णतमन्दधतीं भृशञ्विँमलगण्ड तलेऽपि च पाण्डुताम् ॥ अमरवैद्य सुहृद्य मनागपि व्रजमुपेत्य विलोकय राधिकाम् ॥ ३५ ॥ १६५ ॥

❀ "उन्मादश्चेतसोभ्रमः ॥यथा॥ ❀

तस्यालोचनविभ्रमेण हरिणीचक्षुः समुद्वीक्षितुं सान्द्रं मण्डलमैन्दवञ्च वदनभ्रान्त्या पुनश्चुम्बितुम् ॥ निश्चित्य ध्वनिरित्यसौ पिककलं श्रोतुं समुत्कण्ठते सीतायाविरहेण किन्न कुरते वन्यालये राघवः ३६॥ १६६

"प्राणस्यानिर्गमोमृत्युःकविभिःसमुदाहृतः" ॥ यथा ॥ ❀

पूतनापि शिशुलीलयाऽधुना पातिता सुमुखि गोपितात्मना ॥ सङ्गतेन भृशयौवनेऽमुना किञ्विँधेयमयि नन्दसूनुना ३७॥१६७

❀ "त्रासोमानसविक्षोभः" ॥यथा॥ ❀

शक्रे कोपमुपागते व्रजपुरं हित्वा द्रुतम्ब-ल्लवाः कृष्णस्योद्धृतपर्व्वतस्य सकलाः पार्श्वं समेत्य स्थिताः ॥ दृष्ट्वा तत्र च कुञ्चितर्व्वं[1] रकरं सद्योविशुष्काननाः पेतुस्तस्य महीय सश्च चरणे हारोविणः[2] साङ्गनाः ॥३८॥१६८॥

❀"विकल्पस्तर्कउच्यते,,॥ यथा॥❀

सिताम्भोजे तुङ्गोधयति किमु भृङ्गोमधुरसं किमास्ते पर्य्यङ्के रजतरचिते पञ्चविशिखः ॥ महेशाद्रेश्शृङ्गे किमभितभुजङ्गेश्वरफणा हिमांशौ किम्पङ्कोपमपृथुकलङ्कोविजयते ॥ ३९ ॥ १६९ ॥

॥ ❀ ॥ इति भावनिरूपणम् ॥ ❀ ॥

# ॥ अथाऽनुभावोनिरूप्यते ॥

"भावस्यबाधकायेच तेऽनुभावाःसमीरिताः ॥
शृङ्गारस्यानुभावास्तु स्मितभ्रूक्षेपणादयः,, ॥

(१) श्रीकृष्णस्य ॥

(२) हाशब्दवादिनः ॥

❀ यथा ❀

स्वैरं स्वैरं प्रणयिविनयं सादरं भाषयन्तं
सङ्केताय स्मरचपलितं माधवं प्रोत्सुकञ्च ॥
दृष्ट्वा पङ्केरुहवरमुखी मौनभाजोमुखस्य
स्मेरेणैव द्रुतमथतदाश्वासनंसञ्चकार ॥१॥१७०

हेलालीलाविलासश्चाविब्बोकःकिलकिञ्चितम्
विच्छित्तिर्विभ्रमोमौग्ध्यं विकृतंतपनंमदः ॥
मोट्टायितं कुट्टमितं ललितञ्च कुतूहलम् ॥
विक्षेपोहसितं केलिस्तथाचकितमित्यपि ॥
अमीहावास्तुशृङ्गारभावजन्याःक्रियास्मृताः।
एतेचाप्यनुभावीय लक्षणेनापि लक्षिताः,, ॥
"हेलाभावस्यचात्यर्थबोधिकायाक्रियाहिसा,,

❀ हेलायथा ❀

स्मितसंशोभितवदना मदनानलतापित
न्दयितम् ॥ प्रदिशति लीलागारं वारं वारं
सुनयनविक्षेपैः ॥ २ ॥ १७१ ॥

"लीलाविभूषणैर्वाचाप्रेयसोऽनुकृतिःस्मृता,,

( १ ) क्रीडागृहम् ॥
( २ ) अनुकरणम् ॥

❀ लीला यथा ॥ ❀

गता वल्लीशालामुरसि वनमालां विदधती शिखण्डानामालीमपि च कचपालीपरिसरे ॥ करे धृत्वा वंशीवरमतुलहंसीगतिरियम्मुदा राधाकृष्णव्विपिनरतितृष्णम्मृगयति ॥ ३ ॥ १७२ ॥

"विलासःप्रेयसश्चेष्टा भूषादेरभिनन्दनम्" ॥

❀ विलासोयथा ❀

आप्तस्वनस्य[1] कर्णे निहितसुवर्णे हरिवंशस्य ॥ व्रज पुरि बल्लववनिता मुहुरपि मुदिताभिनन्दनङ्कुरुते ॥ ४ ॥ १७३ ॥

"विब्वोकश्चाभिमानेनाभीष्टस्यापिनिरादरः"

❀ विब्वोकोयथा ॥ ❀

कापि निधाय चिरादभिमानं शयनतले नितरामनिदानम्[2] ॥ हरिकरनिहितललितमणिमालामपि नहि पश्यति सकृदपि बाला ॥ ५ ॥ १७४

(१) आप्तस्वस्य शब्देनिनादनिनदध्वानि ध्वानरवस्वना
(२) अकारणम् ॥ (इत्यमरः)

"स्मितक्रोधभयादीनां साङ्कर्य्यंप्रियसन्निधौ।
किलकिञ्चितमित्येवकविनासमुदाहृतम्," ॥

❀ किलकिञ्चितं यथा ॥ ❀

आनन्दं भजते श्रमव्विँतनुते त्रासाय चोत्कण्ठिता क्रोधञ्चाप्ययते क्षणेन विपिनोपान्तं समुद्वीक्ष्यते ॥ हास्यं संकुरुते त्रपामपि समाधत्ते रुदन्ती मृषा प्रेमान्धा हरिणा सहैवमधुना राधा समाक्रीडति ॥६॥१७५॥

"विच्छित्तीरचनाल्पापि भूषणस्यातिदीपिका,"

❀ विच्छित्तिर्य्यथा ॥ ❀

तनौ रम्यव्वाँसोन च मृदुलहासोऽपि वदने नवा कण्ठे माला यदपि न विशाला मकरिका ॥ ललाटेऽयं बिन्दुस्तदपि तव सिन्दूररचितो विधत्ते लावण्यं चरितमथ धन्यं रतिपतेः ॥ ७ ॥ १७६ ॥

"हर्षादिरुद्धविन्यासो भूषणानाञ्चविभ्रमः,"

❀ विभ्रमो यथा ❀

श्रुत्वा कान्तसमागमं निजपुरोपान्ते ज-

नस्याननात्तन्वन्त्या वरभूषणानि च मुदा सद्यः कुरङ्गीदृशा ॥ दीर्घालक्तकरेषयाऽञ्चितमथोनेत्रम्पदङ्कज्जलैश्चूडा(१)रत्नमुरःस्थले परिधृतं हारस्तु जूटोपरि ॥ ८ ॥ १७७ ॥

"मौग्ध्यमज्ञातवत्प्रश्नोज्ञातस्यापिचवस्तुनः

❁ मौग्ध्यय्यँथा ❁

कस्येदङ्कुसुमं सुवासवलितल्लँब्धं कथं श्रीमता कुत्रासीद्बहुलं किमस्य च फलम्पाणौ सदा धारणे ॥ इत्थन्नन्दनिकेतनस्य सविधे मुग्धेव गोपाङ्गना दृष्टम्पद्ममदृष्टवच्च परितस्सम्पृच्छति श्रीपतिम् ॥९॥१७८॥

" वक्तव्यसमयेमौनन्त्रपयाविकृतंस्मृतम्" ॥

❁ विकृतय्यँथा ❁

प्रार्थितायाः सरोजाक्ष्याः सङ्केताय मुरद्विषा ॥ वचनानि तिरस्कृत्य स्वीकृतं स्वेदबिन्दुना ॥ १० ॥ १७९ ॥

"तपनंम्प्रियविश्लेषेसन्तापोमन्मथस्ययः" ॥

( १ ) शिरोरत्नम् ॥

❀ तपनय्यँथा ॥ ❀

७९ पिकानामुद्गीर्णं कलमतुलकर्णज्वरभर-
मित्यादिनैवोक्तम् ॥ ११ ॥

"स्नेहसौन्दर्य्यसंजातोऽहङ्कारोमदउच्यते,, ॥

❀ मदोयथा ॥ ❀

६८ माकृथाः सखि वृथा परिश्रममित्यादि
नैवोक्तः ॥ १२

अङ्गुलीस्फोटनाच्चैव कर्णकण्डूयनादिकम् ॥
दयितस्यकथारम्भे तन्मोट्टायितमुच्यते,, ॥

मोट्टायितय्यँथा ॥

सद्यः सखीजनानीतदयितस्य कथामृतम् ॥
कर्णे कण्डूयनव्याजादङ्गुल्या सुमुखी द-
दौ ॥ १३ ॥ ८० ॥

"स्पर्शने च स्तनादीनांहर्षेसत्यपि यन्मुहुः ॥
उत्कङ्कुट्टमितंनोति शिरोहस्तादिकम्पनम्,,॥

❀ कुट्टमितय्यँथा ❀

प्रिये करेण स्पृशति स्तनद्वयं नितान्तमो

दाभियुतापि तत्क्षणम् ॥ नकारसत्कारभरं वितन्वती शिरोधुनोतीन्दुमुखी मुहुर्म्मुहुः १४ ॥ ८१ ॥

अङ्गादीनाञ्चलालित्यल्लँलितंकविभिःस्मृतम्

## ❀ ललितय्यँथा ❀

स्मेरं सङ्कलयन्मुहुश्च नटयन्गण्डस्थले कुण्डले कान्त्या स्वस्य विडम्बयँश्च जलदं किञ्चित्समालोकयन् ॥ गोपालैर्व्विलसन्त्स रोरुहदृशां चेतांसि सम्मोदयन्त्सानन्दं हरि रेषं पश्य विपिनादायाति नन्दालयम् १५।१८२

"रम्यार्थस्यावलोकायचापल्यंस्यात्कुतूहलम्,,॥

## ❀ कुतूहलय्यँथा ❀

अजानन्त्यः श्रस्तामपि पथि समस्ताः प्रमुदिता लसन्नीवीं मालामपि भुवि विशालान्निपतिताम् ॥ सभयं कुर्व्वन्तन्धनुरथ लसन्तं क्षितिभुजा ययुर्द्रष्टुं श्यामं जनकपुरि रामं युवतयः ॥ १६ ॥ २८३ ॥

"भूषादेरर्द्धनिर्माणं विक्षेपः समुदीरितः" ॥

❁ विक्षेपोयथा ॥ ❁

अर्द्धाञ्जनं नयनयोर्दधती च कर्णे ताटङ्क मेकमथ चार्द्धपदेत्वलक्तम् ॥ अर्द्धाक्षराणि वचनानि निगद्य वामा कामातुरा मधुरिपु म्प्रसमीक्ष्यतेऽसौ ॥ १७ ॥ १८४ ॥

"हसितन्तुवृथाहासः प्रियस्यालोकनेन यः" ॥

हसितय्यँथा ॥

स्मितन्ते स्वयमुद्भूतम्पर्य्याप्तन्दन्तवासिसि ॥ तिरस्करोति पुष्पाणि प्रवालस्थानि वल्लभे ॥ १८ ॥ १८५ ॥

"प्रादुर्भूतैस्तिरोभावैःक्रीडितंकेलिरुच्यते" ॥

केलिर्य्यथा ॥

दृष्ट्वा तु मानवलितान्दयितान्निकुञ्जे-कृष्णः क्षणञ्च निभृतेन तिरोबभूव ॥ ता

(१) अधरे ॥

(२) विद्रुमस्थानि । अथ विद्रुमः पुंसिप्रवालंपुन्नपुंसक-मित्यमरः ॥

मश्रुपूरितदृशम्भृशमालपन्तीं मत्वा विहस्य सहसा पुनराजगाम ॥ १९ ॥ १८६ ॥

'किञ्चिद्भ्रमेणयाभीतिःप्रियाग्रे चकितंहितत्,,

## ❀ चकितव्यँथा ॥ ❀

वृन्दारण्यविशालभूतलयुषा कृष्णेन कं सन्दिषा सार्द्धङ्कापि सरोजसुन्दरमुखी तत्र भ्रमन्ती चिरात् ॥ निर्म्मोकव्विँपुलं समीक्ष्य चरणस्पृष्टम्भुजङ्गभ्रमात्सद्यस्तम्प्रियमालिलिङ्ग चकिता चीत्कारमातन्वती २०।१८७

## ❀ इति श्रीवेणीदत्तकृतेऽनु. भाव निरूपणम् ॥ ❀

## ❀ अथवीरलक्षणम् ॥ ❀

"उत्साहःस्थायिभावोयःस्वर्णाभःशक्रदैवतः ॥ युद्धदानदयाभेदात्त्रिविधो वीरउच्यते,, ॥

## ❀ युद्धवीरोयथा ॥ ❀

येनोच्चैर्भुजसञ्चयेन शिखरी शम्भोस्स

(१) कञ्चुकम् । समौकञ्चुक निर्म्मोकावि त्यमरः ॥

(२) शिखरमस्यास्तीति शिखरी । पर्वतः ॥

मुत्पाटितो जेता यस्य तनूज एव समरे गी
र्वाणगोष्ठीपतेः[1] ॥ सोऽयं सम्प्रति रावणः सह
गणैरायाति युद्धाशया संश्रुत्येति विभीषण
स्य लपितं रामोजगाम स्मितम् ॥ १ ॥१८८॥

❀ यथावा ॥ ❀

नीता येन च दुर्न्नयेन विपिनात्सीता
विनीताबलाच्छक्त्या सङ्गरसीम्नि चाग्नि
निभया सौमित्रिरेवार्दितः ॥ दृष्ट्वा तं स-
गणम्बलोन्नतभुजग्रामोदितं[2] रावणं स्वैरं-
स्मेरविशोभितोरघुपतिः कोदण्डमालोक-
ते ॥ २ ॥ १८९ ॥

❀ दानवीरोयथा । ❀

तातेनापि निवारितोऽपि गुरुणा शुक्रेण
कोपात्मना वृद्धेनाप्यपरेण यद्यपि दनोः पु
त्रेण वैरोचनिः[3] ॥ मूर्तिं ह्रस्वतराब्विँधाय व-

(१) इन्द्रस्य ॥
(२) बलैरुन्नताये भुजास्तेषां ग्रामेण समुदायेनोदितः प्र-
सिद्धस्तम् ॥
(३) बलिः ।

सुधां स्वल्पाञ्च सञ्जल्पिने देहीति द्विज-
रूपिणे भगवते लोकत्रयं सन्ददौ ॥३॥१९०

❀ यथावा ❀

मह्यं वर्म्म[1] सुमर्म्मपालनमिदं राजन्प्रदेहि[2] द्विजव्याजेनेति च भाषिणे रणविधौ जिष्णोर्ज्जयाकाङ्क्षिणे॥ तातेनाम्बरनायकेन[3] यदपि प्रागेव सर्व्वाँरितोदेवाय त्रिदशेश्वराय मुदितः कर्णोददौ तदद्भुतम् ॥४॥ १९१॥

❀ दयावीरोयथा ❀

हरे शौरे विष्णो दनुजमदजिष्णो मधुरिपो सहाय श्रीबन्धो निखिलगुणसिन्धो भव विभो ॥ वदेद्यावद्दन्तावलपतिरिदन्तावदचिरङ्कृतोमुक्तोग्राहात्स खलु परिणाहा[4]द्भगवता ॥ ५ ॥ १९२ ॥

१ कवचम् ।

२ अर्ज्जुनस्य ॥

३ भगवता सूर्य्येण ॥

४ विशालात् ॥ परिणाहोविशालते त्यमरः ॥

❀ यथावा ❀

कृष्टादुःशासनेनाखिलगुरुसविधे हन्त वा सोपकर्षान्मज्जामि प्रौढलज्जाविषमजलनिधौ त्राहि मान्दीनबन्धो ॥ यावत्क्षौमाभिनग्नँल्लपितामिति भवेत्तत्र पाञ्चालजायानीतं शक्रानुजेन द्रुतमथ वसनन्दीर्घतान्तावदेव ॥ ६ ॥ १९३ ॥

❀ ॥ अथ करुणम् ॥ ❀

"शोकः स्थायीकपोताभः करुणोयमदैवतः,,

❀ करुणोयथा ❀

शक्त्या त्वन्निहतोविहाय चलितोमामत्र तातान्तिकं युक्तन्तद्विनिवेदयामि किमपि भ्रातः क्षणं श्रूयताम् ॥ आनीता दशकन्धरेण दयिता रामस्य सीता वनाद्रुद्भूता विमले दिवाकरकुले वत्सेति कुत्सारिका १॥१९४

१ श्रीकृष्णेन ॥

❀ यथावा ❀

अस्त्येव स्तुतएव रावणगणोलङ्कापि नि-
श्शङ्किता रक्षोरक्षकसञ्चयेन बलिता सीता
पि ह्रा तादृशी ॥ किञ्चान्यद्विमले कुले-
ऽपि महती कुत्सापि[1] वत्सोदिता सौमित्रे वद
कुत्र सम्प्रति रणाद्गन्तुं समुत्कण्ठसे ।२॥११५॥

❀ यथावा ❀

सौन्दर्य्यैरभिसेवितञ्च बलिभिः कर्णादि-
भिर्मण्डितं श्रीखण्डद्रवसञ्चयैरिवधराधूली
भिराभूषितम् ॥ किञ्चेवार्थिभिरा[2]वृतञ्च प
रितोगोमायुभिस्सङ्गरे त्वामद्यापि न पुत्र
मुञ्चति नृपश्रीरत्र दुर्य्योधन ॥३॥११६॥

॥❀॥ अथाद्भुतवर्णनम् ॥❀॥

"कन्दर्पदैवतᳲपीतस्स्थायीचाविस्मयोऽद्भुतः„

❀ यथा ❀

उद्यत्ताण्डवचञ्चलाजिनपटप्रोद्भूतवातप्र-

१ निन्दा ॥ कुत्सानिन्दाचगर्हण इत्यमरः ॥
२ याचकैः ॥

जव्याधूतासमलोचनानलवरज्वालाकुलव्या
चितम् ॥ कैलासङ्गिरिशोनिरीक्ष्य सक-
लव्यालोपशङ्काकुलस्सार्द्धं पौरजनैरसिञ्च
दनिशम्मन्दाकिनीवारिभिः ॥ १ ॥ १९७॥

❀ यथावा । ❀

प्रौढक्रोधाब्धिलीनस्त्वरितमुपगतः प्लावि
तुङ्गोपपल्लीङ्कुर्वद्भिर्ध्वानमुच्चैस्सह निखि-
लघनैर्वारिधारां किरद्भिः ॥ अङ्गुल्यग्रे-
ण शैलन्तृणमिव विपुललीलँया सन्दधा
नन्दृष्ट्वा गोपालवेशं हरिमतिशायितम्म-
न्यते चित्रमिन्द्रः ॥ २ ॥ १९८ ॥

## ❀ अथ हास्यरसवर्णनम् ❀

"हास्योहास्यस्थायिभावःशुक्लःप्रथमदैवतः

❀ यथा ❀

भृशन्दृष्ट्वा तारा नभसि पृथुहाराय रुचि

---

१ गोपालपग्रामम् ॥

२ प्रमथः शिवानुचरः । प्रमथाः स्युः पारिषदा इत्यम
रः । स दैवतोयस्य स

राः क्षणं पाणावेतानय मम समस्ताश्च ज-
नानि ॥ प्रवल्गन्तं सद्योऽद्‌भुतमिति विधायाऽ
तिरुदितं यशोदा पश्यन्ती व्रजपुरि वस-
न्ती विहसति ॥ १ ॥ १९९ ॥

❁ यथावा ❁

केनापि मन्दनयनेन जरार्दितेन चूर्णभ्र
मेण खलु काकमलङ्गृहीतम् ॥ दृष्ट्वेति बा-
लनिचय ऽपरितस्तदानीमुच्चैर्जहास परि-
हासभरम्प्रकुर्वन् ॥ २ ॥ २०० ॥

## ❁ ॥ अथभयानकरसवर्णनम् ॥ ❁

"कालाधिदैवतःकृष्णोभीतिःस्थायीभयानकः"

❁ यथा ❁

कालव्यालीश्वरालीग्रथितनरशिरोमालि-
नीव्याँत्तवक्त्रान्दंष्ट्राजालप्रविष्टासुरविपुल-
पलाङ्कालिकाङ्घोररूपाम् ॥ दृष्ट्वा ऽनिष्टाभि-
शङ्काभरबलितहृदोगन्तुमुत्कादिगन्तन्दैते

१ वृद्धावस्थार्दितेन ।

याः केऽपि शुम्भोरणभुवि सविधे मन्यते स्वस्य मृत्युम् ॥ १ ॥ २०१ ॥

❀ यथावा ❀

आयान्तङ्कुम्भकर्णं रणभुवि कुपितं छिन्ननाशाग्रकर्णङ्गर्जन्तं व्यात्तवक्त्रोदितविषमरदञ्चालयन्तन्धरित्रीम्[2] ॥ दृष्ट्वा सद्यः समन्तात्कति कति कपयोघोरचीत्कारनादङ्कुर्वन्तोवेगवन्तोभयचलितहृदोरामचन्द्रम्प्रजग्मुः ॥ २ ॥ २०२ ॥

❀ अथबीभत्सरसवर्णनम् ❀

"वर्णोयस्य महानीलोमहाकालश्चदैवतः ॥ जुगुप्सास्थायिभावोयोबीभत्सस्सउदरितः "

❀ यथा ❀

देव्याः पाञ्चालजायास्सकलगुरुतटे केशपाशोपकर्षात्[3]सञ्जातप्रौढकोपावलिबलि-

---

१ विवृतमुखोदितविषमदशनम् ॥

२ पृथिवीम् ॥

३ क्वचित्केशवासोपकर्षादितिपाठोऽपि दृश्यते ॥

तद्वद्वीरधर्म्मानुरक्तम् ॥ दृष्ट्वा दुःशासनस्य क्षतजरसभरम्भीमसेनम्पिबन्तञ्चक्रुस्सर्वे सकम्पास्सपदि युधि भटास्तत्र नेत्रापिधानम् ॥ १ ॥ २०३ ॥

❀ यथावा ❀

जिष्णोर्न्नाराचधाराहतपृथुवपुषाम्भूभुजाम्भूमिभाजाङ्कृत्वा कव्यं च नव्यं रणभुवि बहुलं मत्तवेतालबालाः ॥ वृद्धागृध्राश्च शालावृकगणवलितास्तत्र मज्जां लिहन्तः स्वच्छन्दं मोदमाना दिशि दिशि नितरां बाहुवीर्य्यं स्तुवन्ति ॥ २ ॥ २०४ ॥

❀ अथ रौद्ररसवर्णनम् ❀

" रक्तःक्रोधःस्थायिभावोरौद्रोरुद्राधिदैवतः "

❀ यथा ❀

१३१ कृत्वा प्रौढप्रतिज्ञान्निखिलभटपुरोवर्त्तिना येन पूर्वमित्यादिनोक्तएव ॥ १ ॥

❀ यथावा ❀

भङ्क्त्वा कोदण्डमैशं निखिलनृपपुरोयात
वीर्याभिमानोगन्तुङ्कुत्राद्य चित्तङ्कलय
सि महतीं रामसञ्ज्ञान्निधाय॥ हन्ता राज-
न्यकानां रणभुवि कतिधा यः श्रुतः स्वस्य
वृद्धात्सोहं सञ्जातकोपस्सविधमुपगत
स्साम्प्रतं पर्शुरामः ॥ २ ॥ २०५ ॥

❀ यथावा ❀

सम्पूज्योबाहुजानाम्भवसि नयभृतां
त्वं हि नोवृद्धबन्धोप्रौढोक्तिः कापि विप्र
त्वयि तदपि वचः श्रूयताम्मे तथापि ॥ सं
हत्य स्वल्पवीर्यान्रणभुवि भवतोजातदर्प-
स्य गर्वः शृण्वन्मे चापचण्डध्वनिमथ वि-
लयं यास्यति प्राङ्निकामम् ॥३॥२०६॥

❀ अथ शान्तरसवर्णनम् ॥ ❀

"शान्तःशमःस्थायिभावःश्वेतःश्रीपतिदैवतः,,

न सेवा देवानां सकृदपि कृता तावक-
यशोन्न गीतम्पीतव्वाँ त्रिदशतटिनीवारि
मधुरम् ॥ पियारङ्गासङ्गे बहुमतिमतोहन्त

भविता न जाने श्रीजाने किमिति परिणामे मम पुनः ॥ १ ॥ २०७ ॥

❀ यथावा ❀

सदा भक्त्या हीने कलुषभरलीने किल जने कृपाते श्रीबन्धो वसति गुणसिन्धो सुमहती ॥ अतोहेतोश्चेतोमम गरुड़केतोवितनुते प्रमोदं निश्शङ्कं जगति बहुतङ्कं नवति ॥ २ ॥ २०८ ॥

❀ यथावा ❀

क्षणज्योतिःप्रख्यं सकृदपि च सौख्यं विषयजम्भ्रमान्मागाः स्वान्त त्यज विषमिवान्तस्थमचिरम् ॥ मुदा वारं वारं जगति सदुदारं पदयुगं भजस्व श्रीभर्त्तुः शमनभयहर्त्तुश्च नितराम् ॥ ३ ॥ २०९ ॥

❀ यथावा ❀

उन्मादभ्रमिसञ्चयेन वलिते तृष्णास्रवन्तीयुते कामोत्तुङ्गतरङ्गशालिनि महामोहा

(१) क्षणज्योतिर्विद्युदिव प्रख्याकथनंयस्य तदित्यर्थः ।

न्धकारावृते ॥ क्रोधप्रौढसमीरणेन चलिते ऽहङ्कारनीराहिते संसाराम्बुनिधौ च तारणतरि स्त्वन्नाम लक्ष्मीपते ॥ ४ ॥ ११० ॥

❀ यथावा ❀

जगतामसदाचरणम्परिहरकरणं हि कृत्वा नाम ॥ सञ्चिन्तय भयहरणञ्चरणङ्कमला लयाभर्त्तुः ॥ ५ ॥ २११ ॥

श्रीवेणीदत्तकृते रसकौस्तुभेनवरस वर्णनं परिपूर्णम् ॥

❀ श्रीराधाकृष्णार्प्पणमस्तु ॥ ❀

आसीद्यस्तीरभुक्तौ ललितकरमहावंशज श्चारुकर्म्मा चञ्चच्छास्त्राब्जभानुः प्रथित वरयशाः श्रीजगन्नाथशर्म्मा ॥ चक्रे तस्या त्मजन्मा मुरहरचरणाम्भोरुहासक्तचित्तोवे- णीदत्तः प्रयत्नादतिरुचिरतरङ्कौस्तुभं स- द्रसानाम् ॥ १ ॥ समाप्तोऽयङ्ग्रन्थः ॥ ❀

श्रीगणेशायनम ॥

# ॥ अथ वर्षाहर्षकाव्यम् ॥

श्रीकृष्णायनमः ॥

राधावदनराजीवमधुपो मधुसूदनः ॥
राधावदनशुभ्रांशुचकोरोरुचिरोऽवतु ॥१॥

❀ वर्षास्वभावः ❀

सारङ्गाःप्रणदन्ति हंसनिकरा यान्ति द्रुतम्मानसं सीदन्ति प्लवगा वनेषु परितः कुध्द्यन्ति कण्ठीरवाः ॥ सानन्दा विशकण्ठिका दिशि दिशि प्राज्या समुड्डीयते केकी नृत्यति हृष्यतीह जनता धाराधरे गर्जिते ॥२॥ शिखिश्रेणी प्रावृट्समयमधुना वीक्ष्य नितराममन्दं कूजन्ती भजति सकला सम्मदभरम् ॥ वराकाश्चक्राङ्गास्सहवनिलयाऽम्भोजवनतोयथार्थञ्जानन्तो निजपरिभवय्याँन्ति विदिशम् ॥३॥ पतन्ति राधाधरतोऽम्बुधाराऽपतन्ति नद्या धरतोऽतिधाराः ॥ पतन्ति

पान्थेक्षणवारिधारा पतन्ति लोके मदनासि
धाराः ॥४॥ तपस्विनः कन्दरमाश्रयन्ति पत
त्रिण पादपमाश्रयन्ति । पान्थाःस्वदेशा
यनमाश्रयन्ति रम्याऽबलाः स्वामिनमाश्र-
यन्ति ॥ ५ ॥ क्वचिद्बलाकावलिराविभा
ति क्वचित्तडित्पङ्क्ति रतीव भाति ॥ क्वचि-
द्बलारातिधनुर्विभाति क्वचिद्घनः केव
लमेव भाति ॥ ६ ॥ नृत्यन्ति हर्षैः शिखि-
नः क्वचित्क्वचिद्गर्ज्जन्ति हर्षैः करिणः क्वचि
त्क्वचित् ॥ क्रुद्ध्यन्ति तीव्रं हरयः क्वचित्क्वचि
त्सीदन्ति तीव्रङ्कपयः क्वचित्क्वचित् ।७। क-
दम्बकुसुमावृतैः कुटजकेतकीसंवृतैर्म्मयूर
रवराञ्जितैर्न्नवसरोवरैः सय्युँतैः ॥ हरिद्यवस-
नूतनै परमशोभनैः काननैरभूदिह वसुन्ध
रा जनमनोहरा मेदुरा ॥ ८ ॥ सन्मानसं हं
सचय प्रयाति रत्नाकरं शैवालिनी प्रयाति ॥
स्वकीयदेशम्पथिक प्रयाति नारीनिकामं र-
मणम्प्रयाति ॥ ९ ॥ सौदामिनी वारिदमाप

भान्तन्नितम्बिनी कामुकमाप कान्तम् ॥ तरङ्गिणी सागरमाप तूर्णम्पयोदकालम्प्रसमीक्ष्य पूर्णम् ॥ १० ॥ क्वचित्तु जम्बूफलशोभनानि क्वचित्तमालादिमनोहराणि । क्वचित्तु जातीकुसुमाश्रयाणि स्वतोऽपि रम्याणि वनानि कुत्र चित् ।११। क्वचिद्विराजन्ति सुरेन्द्रगोपाः क्वचिन्नवीनानि सुशाद्वलानि ॥ क्वचित्तुजात्यादिलताकलापाः क्वचित्सपुष्पाणि सरोवराणि ॥१२॥ हृष्यति चातकपत्री प्रवदति काकोलसञ्चयः परितः ॥ प्रावृषि नृत्यति केकी हंसोगमनं सुदर्शयति ।१३।

## ❀ वर्षासमीरः ❀

उन्मूलयन्तोवरवर्णिनीनाम्मानस्य मुद्रा हृदयानि यूनाम् ॥ उद्वेजयन्तः परितोऽतिधीरा वहन्ति वर्षासमये समीराः ॥ १४ ॥

## ❀ उत्प्रेक्षा ❀

सन्तापदे पान्थजनस्य संहतेः समागते नीलबलाहके नृपे ॥ कदम्बजाता नवकेत-

कीकुलं वसुन्धरा मञ्जु ददात्युपायनम् १५ नवमनसिजभूपे शासति स्वस्य राज्यं समुचित उपहारो दीयते देवताभिः ॥ जलदसचिवरम्यश्चापि आखण्डलेन प्रियककुसुममुर्व्या वायुना पुष्पगन्धः ॥१६॥ इमाविवँ धुत्काञ्चीं स्खलयति कटेः काञ्चनमयीं वृणोतीह श्यामांशुकजलधरै ⌃पाण्डुरतनुम् ॥ शुभासारव्याजैस्त्यजति ननु नेत्राम्बु नितरां सखि द्यौरप्येषा नवविरहिणीवाभ्रसमये ॥१७॥ असितमुदिरवासश्चञ्चलास्वर्णकाञ्चीन्नवविशदवलाकाम्मौक्तिकीङ्केलिमालाम् ॥ तिलकमितिमघोनः कार्म्मुकम्बिभ्रतीयञ्जलदसमयसन्ध्या भाति सीमन्तिनीव ॥१८॥ लीलागारवरे विहायसि चलद्विद्युन्नवोढ़प्रिया निर्दिष्टा मुदिरप्रियेण सहसा भूयोरताय द्रुतम् ॥ चाञ्चल्यातिशयं विधाय विगता तस्माद्बभूव क्षणम्मन्येऽहं क्षणमेव हार्दवलिता तत्रैव सा सङ्-

ता ॥१९॥ नवायं जीमूतोजगति वनिता
भाग्यमुदितन्नवा शम्पाशोचिर्विरहिजनस
न्तापकलिका ॥ न धारासम्पातऽपथिकल
लनाबाष्पनिवहो नवा वर्षाकालोमनसिज
महस्यैव दिवसः ॥२०॥ कालस्कन्दवनीव
शम्बररिपोर्भूपस्य सम्मर्द्दिनी शत्रोर्य्योध
नहस्तिनीव रमणीवेणीव चैकास्थिता ॥ प्रा
योदूरगताध्वगस्य परितः सीमन्तिनीसंहते
र्भीमा सय्यँमनीव साम्प्रतमियं कादम्बिनी
राजते ॥२१॥ अनारतव्वँर्षति वारिवाहोद्यौ-
र्भीरुनेत्राम्बुचया उताहो । पतन्ति वर्षास
मये चिरस्य मन्ये समुच्चैर्विरहे प्रियस्य ॥२२

## ❀ वर्षाभिसारिका ❀

न विश्रामन्धाराधरसलिलधारा नु लभते
तडिन्माला किञ्चित्समुदयति या साऽति
तरला ॥ विनेदानीन्दोषाकरमहह दोषा
ऽपि दयितन्तथाप्येषा योषा प्रणयनवरोषा
ऽभिसरति ॥२३॥ यदपि भोगिकुलाकुलिता

ऽवनी यदपि दीर्घलताबलिता वनी ॥ यद
पि मेघघटाघटिता तमी तदपि याति पति
व्वँरवर्णिनी ॥२४॥

## ❀ वर्षावाग्विदग्धा ❀

पयोदसमये वरे शिखिकुलाकुले मञ्जुले
दिनान्तमवलम्बिनि प्रथितकामिकामोत्सवे
नवद्युतिपयोधरं जनमनोहरं सुन्दरन्त्वदीय
गमनं सखे भवति वीक्ष्य नैवोचितम् ॥२५॥
समये जलदस्य हि यासि सखे न विवेक इ-
तोहृदये भवतः ॥ समुदीक्ष्य पयोधरमुच्च
मिमन्नहि कोऽपि ययासति मन्दिरतः ॥२६
तुङ्गे लसति पयोदे पुरतोऽराजन्ति दुर्गमा न
द्यः ॥ गमनन्त्वदीयमद्य प्रभवति युक्तन्नवा
लयादस्मात् ॥ २७ आप्लाविता वसुमती भु
वनेन पान्थ मेघप्रचण्डकलया कलिता दि
गन्ताः ॥ एकाकिनीञ्चतुर मामपहाय ग-
न्तुमीहाङ्करोति नहि सम्प्रति युक्तमेतत् ॥ २८

## ❀ वर्षामानिनीम्प्रत्युक्तिः ❀

मानं सम्प्रति मुञ्च मानवलिते मानेन किं मादृशो क्वायम्मानभरः क्ववैष समयस्त द्दृश्यताञ्चञ्चले ॥ इत्येवव्वँदति प्रियं म ति महामानम्प्रिया सञ्जहौ नायन्तद्दयितम्य वाक्यपटिमा प्रावृट् तवायङ्गुणः ॥ २९ आ सारैस्सलपन्नोदकैश्च कुसुमैरश्शुभ्रैस्सुवर्णोपलै र्व्विद्युद्दीपवरैश्च धूपनिकरैः कादम्बिनीनिर्म्मि रैः ॥ वाद्यैस्सुस्तनितैश्च मञ्जुवल्लिभिस्सर्व्वे रमीभिः प्रिये मन्ये भूपतिदर्प्पकेण अवनी प्रावृड्वताव ऽच्यते ॥३०॥ सर्व्वत्र मानइह दर्प्प- कभूमिपाले भृङ्गालिकूजितमनोज्ञपयोदका ले ॥ सिन्दूरबिन्दुममलङ्कुरु तन्वि भाले मीनोपमेन नयनेन च पश्य बाले ॥ ३१ ॥ विलोक्याभ्रङ्केकी रुचिरलपितं सम्प्रथयते वने कोकद्वन्द्वावलिरपि कलं सङ्कुलयते ॥ वियु- क्त्यैवं सर्वा निजकठिनमानव्विँसृजाति मुदेह ते चित्ते तदपि लघुमानो विलसति ॥ ३२ ॥ नेदं सुस्तनितन्तनोति मुदिरो भेरी स्वनो

मान्मथः शम्पेयन्नहि भूपतेरतिपतेर्हैमी कृ
पाणप्रभा ॥ नायम्मानिनि वारिदोगजघटे
त्यत्र प्रतीमोवधूमानद्रव्यमदभ्रमेति नित
रामाहर्त्तुमीशः स्मरः ॥ ३३

## ❀ वर्षाविरहिणी वाक्यम् ॥ ❀

पूर्णेयव्वॅसुधा कृता तृणभरैर्नद्योजलैःपू
रिताः शारङ्गीकुलकामएव करुणाभावेन स
म्पूरितः ॥ केकी काननमण्डलेऽपि भवता
ह्यामोदपूर्णीकृतः पूर्णत्वन्न मनोरथे मम क
थन्धाराधर स्वीकृतम् ॥३४॥ इमाव्वर्षा वर्षा
दधिकदिनमानाव्विँदधते तनौ शम्पा कम्पा
ऽतिशयमनिशं सव्विँतनुते ॥ अरण्यंकारुण्यं
रचयति मुहुः केवलमिदं विनाकान्तं शा
न्तिङ्कथमपि न धत्ते मम मनः ॥ ३५ ॥
इयम्प्रावृट्शोच्या सखि सपदि मोच्या स्व
नगरी न कुञ्जन्द्रष्टव्याङ्क्मिपि नहि गम्यं
सुखपदम् ॥ सुसौख्यङ्कर्त्तव्यन्नहि हतधिया
सम्प्रति मया प्रवासम्प्राणेशे गतवति पयोद

स्यसमये ।३६।प्रियसखिपश्यपयोदंपश्यविनो
दंसमन्ततः शिखिनाम्॥प्रियतमकठिनवियो
गंपश्यममातीवदुस्सहञ्च॥३७॥ स्वीयप्रसूनर
चितेन नु कार्म्मुकेण वश्यञ्चकारभुवनञ्झ
षकेतनोयः॥ पौरन्दरं धनुरिदं परिगृह्यसोऽयं
तोयागमे सखि करिष्यति किन्नकस्य॥३८॥

* वर्षावियोगिनीस्प्रतिवाक्यम् *

आगत्यालिव्रजकरतलैर्य्यापुरा केलि गेहंली
लान्ते स्वप्रियतमकरे मस्तकं न्यस्य शिश्ये॥
एषावर्षाऽगमनसमये साम्प्रतं रुक्छलात्सा
शेते शोकाकुलितहृदया तद्वियोगैर्द्धरायाम् ३

* वर्षाःप्रत्युक्तिः *

ऽुरा ग्रीष्मे भीष्मे कृशतनुरियम्पुष्परहिता नवा
ऽलोक्या भव्याप्यथ कृतिजनैस्सद्भिरभवत्॥
इदानीं साजाती नयनसुभगा पुष्पबलिता
सहर्षा वर्षा हे त्वदभिकृपया गजातिवने॥४०॥

श्रोत्रियान्वयजेन श्री लेखनाथेन सर्षपे।
ग्रामेऽद्योरचितं काव्यं वर्षाहर्षाह्वयं लघु ॥ ४१ ॥

## समाप्तमिदङ्काव्यम्

श्रीसरस्वत्यैनमः ।



विज्ञाप्यते सत्सु भवत्सु चेति ❀
श्री लेखनाथेन विनीतभावैः ॥
मुद्राजदोषस्तु भवद्भिरस्य ❀
ग्रन्थस्य नित्यं क्षमनीयएव ॥

जि० दरभङ्गा,
डा० मनीगाछी,
मो० सारिसव,

मूल्यम् ।=)॥